

# सांख्यसूत्रवैदिकवृत्तिः ।

अर्थात्

श्रीमन्महर्षिकपिलप्रणीतसूत्राणां वेदानुसारिणी वृत्तिः ।

श्रीमन्निखिलशास्त्रनिष्णातपण्डितस्वामि
हरिप्रसादेन निर्मिता ।



मुम्बय्यां

"श्रीवेङ्कटेश्वर" यन्त्रालयेऽङ्कयित्वा प्राकाश्यं नीता

सम्वत् १९६२.

प्रथमावृत्तिः १०००          मूल्यं १)

ओ३म्

# सांख्यसूत्रवैदिकवृत्तिः ।

अर्थात्

श्रीमन्महर्षिकपिलप्रणीतसूत्राणां वेदानुसारिणी वृत्तिः ।

श्रीमत्परमहंसपरिव्राजकाचार्य्योदासीनवर्य्यात्माराम
भगवत्पादशिष्येण.

श्रीमत्परमहंसपरिव्राजकाचार्य्योदासीनवर्य्यपण्डितस्वामि
ज्वाहिरदासभगवत्पादाधिगतवेदवेदाङ्गविद्येन ।

## श्रीमन्निखिलशास्त्रनिष्णातपण्डितस्वामि हरिप्रसादेन निर्मिता ।

साच

विहारप्रान्तीय भागलपुरनिवासि महामान्य श्रीयुत चौधरी बाबू छेदी
प्रसाद हरिमोहनमिश्र वैजनाथ मण्डल महाशयैः । 15

## मुम्बय्यां

"श्रीवेङ्कटेश्वर" यन्त्रालयेऽङ्कयित्वा प्राकाश्यंनीता

सम्वत् १९६२.

प्रथमावृत्तिः १००० मूल्यं १)

ओ३म्

# सांख्यसूत्रवैदिकवृत्तिः

अर्थात्

श्रीमन्महर्षिकापिलप्रणीतसूत्राणां वेदानुसारिणी वृत्तिः ।

श्रीमत्परमहंसपरिव्राजकाचार्य्योदासीनवर्य्यात्माराम
भगवत्पादशिष्येण.

श्रीमत्परमहंसपरिव्राजकाचार्य्योदासीनवर्य्यपण्डितस्वामि
ज्वाहिरदासभगवत्पादाधिगतवेदवदाङ्गविद्येन ।

## श्रीमान्निखिलशास्त्रनिष्णातपण्डितस्वामि हरिप्रसादेन निर्मिता ।

साच

विहारप्रान्तीय भागलपुरनिवासि महामान्य श्रीयुत चौधरी बाबू छेदी
प्रसाद हरिमोहनमिश्र बैजनाथ मण्डल महाशयैः ।

## मुम्बय्यां

"श्रीवेङ्कटेश्वर" यन्त्रालयेऽङ्कयित्वा प्राकाश्यंनीता

सम्वत् १९६२.

प्रथमावृत्तिः १००० मूल्यं १)



# अथ साङ्ख्यदर्शनम् ।

द्रष्टव्यं यो विवेकेन प्रधानपुरुषेश्वरम् ।
व्याचख्यौ मोक्षकामानां वन्दे तं कापिलं वरम् ॥ १ ॥
सांख्यसिद्धान्तजिज्ञासुबालधीबोधहेतवे ।
पुण्यां कपिलसूत्राणां वैदिकीं वृत्तिमारभे ॥ २ ॥

अथ परमपुरुषार्थसाधनत्वेनेप्सिततमप्रकृतिपुरुषविवेकप्रत्ययं विस्तरेणोपदिदिक्षुः करुणैकनिलयो भगवान् कपिलाचार्य्यस्तदुपदेशपरं शास्त्रमारभमाणः परमपुरुषार्थस्वरूपं दर्शयन् तदारम्भन्तावत्प्रतिजानीते—

**"अथ त्रिविधदुःखात्यन्तनिवृत्तिरत्यन्तपुरुषार्थः" ॥ १ ॥**

अथेति शास्त्रारम्भमाह । त्रिविधदुःखात्यन्तनिवृत्तिः=आध्यात्मिकाधिभौतिकाधिदैविकेति तिस्रो विधा यस्य,तत् त्रिविधं, तच्च दुःखञ्चेति त्रिविधदुःखं, तस्य याऽत्यन्तनिवृत्तिः=अन्तमतिक्रान्ता बाधिताबाधितसाधारण्येन निःशेषतोनिवृत्तिः सोऽत्यन्तपुरुषार्थः=अन्तमतिक्रान्तः पुरुषमात्रेणार्थनीयः परमपुरुषार्थ इत्यर्थः ।

भोगापवर्गौ हि पुरुषार्थौ । यत्कृते प्रधानप्रवृत्तिरिति सांख्याः । तत्र भोगस्तावज्जन्यभावतया नान्तमतिक्रामति । तेनैष पुरुषार्थोऽपि नात्यन्तपुरुषार्थः। अन्तमतिक्रामतःपुरुषार्थस्यैवात्यन्तपुरुषार्थत्वात् । अत एव तत्साधनोपदेशपरंःशास्त्रमपि नारम्भणीयम् । मन्दप्रयोजनत्वापत्तेः । किन्तु दुःखात्यन्तनिवृत्तिसाधनोपदेशायैव । यतो दुःखात्यन्तनिवृत्तेरेवान्तमतिक्रामन्ती

पुरुषमात्राभिलाषगोचरतया परमपुरुषार्थ इति । तथाच—'पुरुषमात्राभिलाषगोचरदुःखात्यन्तनिवृत्तिलक्षणपरमपुरुषार्थसाधनस्य प्रकृतिपुरुषविवेकप्रत्ययस्योपदेशपरम् । **"अथेत्यादि,"** **"पुरुषार्थ** इत्यन्तं षडध्यायात्मकं शास्त्रमेतदारब्धमिति सूत्रार्थो निष्पन्नः ।

**यद्यपि** सांख्यानां दुःखादि सर्वं बुद्धेरेव । नपुरुषस्यात्मनः । तस्य कूटस्थनित्यत्वेन दुःखादिपरिणामानभ्युपगमात् । तथापि दुःखादिमत्या बुद्धेःसन्निधानाव पुरुषस्यात्मनः तत्र प्रतिबिम्बिततया बुद्धेरेव वा तत्र प्रतिबिम्बिततया दुःखादिच्छायापत्तौ विवेकग्रहाभावेन सूर्ये बिम्बे जलकम्पादिवदौपाधिकं पुरुषेऽपि दुःखादिसर्वमस्त्येव, तेन तदत्यन्तनिवृत्तिः परमपुरुषार्थ इत्युपपद्यते। निवृत्तिश्चात्र न ध्वंसः । सांख्यानांसत्कार्यवादित्वेनाभावपदार्थानङ्गीकाराव, किन्त्वतीतानागतावस्थयोरेव तेषां ध्वंसप्रागभावस्थानितयाऽतीतावस्थैव । तस्याश्चात्यन्तत्वं तद्दुःखानागतावस्थयाऽसहवृत्तित्वमिति । तत्र चातीतं दुःखं स्वयमेवातीतावस्थां यातम् । वर्तमानञ्च भोगारूढतया क्षणान्तरे स्वयमेव यास्यति । परिशेषादनागतं दुःखमेवातीतावस्थां यापनीयम् । तद्यथोक्तं समानतन्त्रेऽपि । **यो. पा. २ सू. १६ । 'हेयंदुःखमनागतम्'** इति । तस्य चात्मनि पुरुषेऽविवेकमूलकतया विवेकप्रत्यय एव सम्यगुच्छेदोपायो नान्यः कश्चनेति तदुपदेशाय शास्त्रारम्भ इति भावः,

**तत्रा**त्मानं=शरीरंमनश्चाधिकृत्य प्रवृत्तं व्याध्याद्युत्थं कामक्रोधाद्युत्थञ्च दुःखमाध्यात्मिकम् । भूतानि=प्राणिनो=व्याघ्रचोरादीनाधिकृत्य प्रवृत्तं दुःखमाधिभौतिकम् । देवान्=विद्युदग्निवाय्वादीनधिकृत्य प्रवृत्तं दाहाद्युत्थं दुःखमाधिदैविकम्।यद्यप्येतत्सर्वं दुःखं मानसमेव, तथापि मनोमात्रजन्यत्वाजन्यत्वाभ्यां विशेष इति विवेकः ॥ १ ॥

**ननु** भवतु त्रिविधदुःखात्यन्तनिवृत्तिरत्यन्तपुरुषार्थः, तथापि सा दृष्टोपायादेव सेत्स्यति । कृतं बह्वायाससाध्येन शास्त्रीयोपायेन विवेकप्रत्ययेन । तत्राह—

**"न दृष्टात्तत्सिद्धिर्निवृत्तेऽप्यनुवृत्तिदर्शनात्" ॥ २ ॥**

दृष्टात्=लोकसिद्धादौषधाद्युपायात् तत्सिद्धिः=तस्यास्त्रिविधदुःखात्यन्तनिवृत्तेः सिद्धिः=निष्पत्तिर्न=न भवति । कुतः ? निवृत्तेपि=लोकसिद्धोपायेन कथञ्चिन्निवृत्तेऽपि दुःखेऽनुवृत्तिदर्शनात्=कालान्तरे पुनस्तदनुवृत्तिदर्शनादित्यर्थः ।

नह्यत्यन्तनिवृत्तं पुनरनुवर्तते । तस्मान्न तेन तदत्यन्तनिवृत्तिरिति भावः ॥ २ ॥

नन्वेवन्तर्हि दृष्टोपायजन्यायास्तद्दुःखनिवृत्तेर्लोकसिद्धं पुरुषार्थत्वं न स्यात् । तत्राह—

**" प्रात्यहिकक्षुत्प्रतीकारवत्तत्प्रतीकारचेष्टनात्पुरुषार्थत्वम्" ॥ ३ ॥**

दृष्टादित्यनुवर्तते । प्रात्यहिकक्षुत्प्रतीकारवत्='उपसर्गस्य घञि'[1] इति वा दीर्घः । प्रतीकारो निवृत्तिमात्रं न त्वत्यन्तनिवृत्तिः । प्रात्यहिकः=प्रत्यहं जायमानो यः क्षुत्प्रतीकारः=भोजनादितः क्षुतः=बुभुक्षायाः प्रतीकारः=निवृत्तिमात्रं तद्वत्=तस्य यथा पुरुषार्थत्वं, तथा 'यदा दुःखं तदा तत्प्रतिकर्तव्यम्' इतिन्यायेन दृष्टात्=दृष्टोपायतोऽपि तत्प्रतीकारचेष्टनात्=तस्याध्यात्मिकादिदुःखस्य यः प्रतीकारः=निवृत्तिमात्रं, तस्य चेष्टनात्=अन्वेषणात् कथञ्चिज्जायमानायास्तद्दुःखनिवृत्तेः पुरुषार्थत्वं=पुरुषार्थत्वमात्रं न त्वत्यन्तपुरुषार्थत्वमित्यर्थः ॥ ३ ॥

ननु तथापि पुरुषार्थोऽसौ दृष्टोपायजन्यो दुःखप्रतीकारः पुरुषैरुपादेयः किन्नस्यादित्याशंक्य पुरुषैरुपादेयोऽपि निपुणैर्हेय एवेत्याह—

**"सर्वासंभवात् संभवेऽपि सत्तासंभवाद्धेयः प्रमाणकुशलैः" ॥ ४ ॥**

दृष्टादित्यनुवर्तते । दृष्टात्=दृष्टोपायादेकस्मिन् कस्मिँश्चित्प्रतिकृतेऽपि दुःखे

---

१ अष्टा० अ० ६ पा० ३ सू० १२२ ।

सर्वासंभवात्=सर्वेषामाध्यात्मिकादीनां तेषां प्रतीकारासंभवात् । संभवेऽपि= कथञ्चित्काकतालीयन्यायेन स्थूलरूपतया तत्प्रतीकारसंभवेऽपि सत्तासंभवात्= सूक्ष्मरूपाणांतेषां सत्तायाः संभवात्=अवश्यंभावाद् हेयः=सर्वसाधारणवत् परमपुरुषार्थत्वबुद्ध्या नोपादेयो दृष्टोपायजन्यो दुःखप्रतीकारः प्रमाणकुशलैः= निपुणैरित्यर्थः ॥ ४ ॥

**हेयत्वे** हेत्वन्तरमाह—

**" उत्कर्षादपि मोक्षस्य सर्वोत्कर्षश्रुतेः " ॥ ५ ॥**

हेयः प्रमाणकुशलैरित्यनुवर्तते । मोक्षस्य=शास्त्रीयोपायजन्यस्य दुःखात्यन्तनिवृत्तिलक्षणस्य कैवल्यस्योत्कर्षादपि=दृष्टोपायजन्यदुःखप्रतीकारापेक्षयोत्कृष्टत्वादपि हेयः स प्रमाणकुशलैरिति पूर्ववत् । **ननु** मोक्षोत्कर्षे किं मानम् । तत्राह—सर्वोत्कर्षश्रुतेः=**' अशरीरं वाव सन्तं न प्रियाप्रिये स्पृशतः '** ।

**' एषास्य परमागतिरेषास्य परमा संपत् '** इति सर्वस्माद् दृष्टोपायजाद्दुःखप्रतीकारान्मोक्षस्यौत्कृष्ट्यश्रुतेरित्यर्थः ॥ ५ ॥

**ननु** माभूद् दृष्टोपायाद् दुःखात्यन्तनिवृत्तिः । अदृष्टोपायात्तु वैदिककर्मणःस्यात् । तत्राह—

**" अविशेषश्चोभयोः " ॥ ६ ॥**

एवार्थश्चः । उभयोः=द्वयोर्दृष्टादृष्टयोर्लौकिकवैदिकोपाययोरविशेषश्च=दुःखात्यन्तनिवृत्त्यसाधकतायामविशेष एव=विशेषो नास्त्येव=तौल्यमेवेत्यर्थः ।

**यथा** दृष्टोपायस्यौषधादेर्नदुःखात्यन्तनिवृत्तिसाधकत्वम् । तथाऽदृष्टोपायस्यापि केवलयज्ञादेर्वैदिककर्मण इति भावः ॥ ६ ॥

**ननु** दुःखात्यन्तनिवृत्तेर्मोक्षत्वाद्दुःखयोग एव बन्धो वक्तव्यः, स च स्वाभाविकश्चेत् कथं दृष्टादृष्टोपायवच्छास्त्रीयोपायेन विवेकप्रत्ययेनापि निव-

---

१ छान्दो०प्रपा०८ खं१२—१० । २ बृहदा०अ०६ब्रा०३—३२.

र्तेतित्याशंक्य बन्धस्य तस्य विवेकप्रत्ययनिवर्त्यत्वसंपत्त्यर्थमविवेकमात्रप्रयोज्यत्वं व्यवस्थापयिष्यन्नादौ तावत्स्वाभाविकत्वे दोषमाह–

**"न स्वभावतो बद्धस्य मोक्षसाधनोपदेशविधिः"॥७॥**

पुरुषस्य स्वभावतो बन्धो न संभवतीति प्रतिज्ञाशेषः । कुतो न संभवति । यतः स्वभावतो बद्धस्य=स्वरूपतो दुःखयोगवतः पुरुषस्य मोक्षसाधनोपदेशविधिः=मोक्षाय=दुःखात्यन्तनिवृत्तिलक्षणाय कैवल्याय साधनोपदेशस्य=शास्त्रेण कृतस्य तदुपायोपदेशस्य विधिः=विधानं=करणम्=अनुष्ठानं न=न घटते इत्यर्थः ॥

यस्मिन् सति कारणान्तरविलम्बाद्विलम्बो यस्याभिव्यक्तौ न भवति, तस्य तत्स्वाभाविकं यथाग्नेरौष्ण्यमिति भाष्यकारः ॥ ७ ॥

**ननु** कस्मादनुष्ठानं न घटते । मा वा घटतामनुष्ठानं किन्तेन । तत्राह–

**"स्वभावस्यानपायित्वादननुष्ठानलक्षणमप्रामाण्यम्" ८॥**

स्वभावस्य=स्वरूपस्यानपायित्वात्=यावद्द्रव्यभावित्वेनाग्न्यौष्ण्यवदनिवर्त्यत्वादिति पूर्वत्र हेतुः । शास्त्रोपदेशस्यानुष्ठानाभावे दूषणम् 'अननुष्ठानलक्षणमप्रामाण्यम्'=अननुष्ठानं=तदुपदेशाननुवर्तनं=तद्विहिताकरणमिति यावद् लक्षणं=ज्ञापकं यस्य तादृगप्रामाण्यम्=अप्रमाणत्वं शास्त्रस्य तस्य स्यादित्यर्थः ॥ ८ ॥

**नन्वेवं** तर्हि शास्त्रबलादेवानुष्ठानमस्तु । तत्राह–

**"नाशक्योपदेशविधिरुपदिष्टेऽप्यनुपदेशः" ॥ ९ ॥**

अशक्योपदेशविधिः=अशक्याय=साधयितुमशक्याय फलायोपदेशस्य=शास्त्रीयस्य तदुपायोपदेशस्य विधिः=अनुष्ठानं न=न संभवति । कुतः? यतः उपदिष्टेऽपि=शास्त्रेणोपदिष्टेऽप्यशक्यस्योपायेऽनुपदेशः=स तस्य शास्त्रस्योपदेशोऽनुपदेश एव=उपदेशाभास एव भवतीत्यर्थः ।

**अ**संभवार्थप्रतिपादनादिति भावः ॥ ९ ॥

**अत्र** स्वाभाविकापायवादिमतमाशंकते ।

**"शुक्लपटवद् बीजवच्चेत्" ॥ १० ॥**

**ननु** शुक्लपटवत्=यथा शुक्लपटस्य रागेण स्वाभाविकं शौक्ल्यं बीजवत्= यथा वा बीजस्य वह्निना स्वाभाविकं तत्तदंकुरजननसामर्थ्यमपैति, तथा पुरुषस्यापि स्वाभाविको बन्धः शास्त्रीयोपायेनापैष्यति न कश्चिद्दोष इति चेदित्यर्थः ॥१०॥

**समाधत्ते ।**

**"शक्त्युद्भवानुद्भवाभ्यां नाशक्योपदेशः" ॥ ११ ॥**

नाशक्योपदेशः=उक्तोदाहरणाभ्यामप्यशक्योपदेशो न भवति । कुतः ? शक्त्युद्भवानुद्भवाभ्याम्=उत्तेजकेन प्रतिबन्धकेन च तत्तच्छक्तेरुद्भवानुद्भवाभ्यां सर्वत्रोत्पादापायव्यवहारयोरभ्युपगमादित्यर्थः ।

**तथा च** शुक्लपटबीजयोरपि रागेण वह्निना च प्रतिबन्धकेन शौक्ल्यांकुरशक्त्योरनुद्भव एव जायते नात्यन्तापायः । रजकस्य व्यापारेण योगिनः संकल्पेन चोत्तेजकेन पुना रक्तपटभृष्टबीजयोस्तयोः शौक्ल्यांकुरशक्त्योराविर्भावस्योपलब्धेः । तस्मान्नास्तिकुत्रापि स्वाभाविकस्यापायः शक्यनिदर्शन इति न पुरुषस्य स्वाभाविको बन्ध इति फलितम् ॥ ११ ॥

**ननु** मास्तु पुरुषस्य स्वभावतो बन्धः । कालवादिनो मे कालतो निमित्ताद्भविष्यति, तत्राह—

**"न कालयोगतो व्यापिनो नित्यस्य सर्वसंबन्धात्" ॥ १२ ॥**

निमित्तं तसिलर्थः । पुरुषस्य बन्ध इति प्रकरणलाभः । न=नापि कालयोगतः=कालसंबन्धनिमित्तकः पुरुषस्य बन्धः । कुतः ? व्यापिनः= सर्वपदार्थसंयोगिनो नित्यस्य=सततस्य त्वदभ्युपगतकालपदार्थस्य सर्वसंबन्धात्=सर्वतः सर्वदा मुक्तामुक्तसर्वपुरुषसंयोगादित्यर्थः ।

बन्धकस्य कालस्य मुक्तामुक्तसर्वपुरुषसंबन्धाविशेषादमुक्तस्येव मुक्तस्यापि बन्धापत्तेरिति भावः ।

**सांख्यानां** तु क्षणात्मकः कालो नित्यः तदन्यः सर्वोऽप्यनित्य इत्यग्रे विस्पष्टम्।

'अत्र च प्रकरणे कालदेशकर्मादीनां निमित्तत्वसामान्यं नापलप्यते। श्रुतिस्मृतियुक्तिभिः सिद्धत्वात्। किन्तु यन्नैमित्तिकत्वं पाकजरूपादिवन्निमित्तजन्यत्वं तदेव प्रतिषिध्यते। पुरुषबन्धस्यौपाधिकत्वाभ्युपगमात्' इति भाष्यकृतः॥ १२॥

**एतेनैव** हेतुना दिग्योगतोऽपि पुरुषस्य बन्धं निराचष्टे।

"न देशयोगतोऽप्यस्मात्"॥ १३॥

देशयोगतोऽपि=दिक्संबन्धनिमित्तकोऽपि न=पुरुषस्य बन्धो न। कुतः? अस्मात्=व्यापिनो नित्यस्य सर्वसंबन्धादित्यर्थः।

**कालवद्** दिशोऽपि मुक्तामुक्तसर्वपुरुषसंबन्धाविशेषादमुक्तस्येव मुक्तस्यापि बन्धापत्तेरिति भावः॥ १३॥

**नन्वस्तु** तर्ह्यवस्थातो बन्धस्तत्राह—

"नावस्थातो देहधर्मत्वात्तस्याः"॥ १४॥

अपिरनुवर्तते। नाप्यवस्थातः=बाल्यकौमारयौवनादिलक्षणावस्थातः पुरुषस्य बन्धः। कुतः? तस्याः=अवस्थाया देहधर्मत्वात्=आत्मातिरिक्तस्यानात्मनो देहस्य धर्मत्वादित्यर्थः॥ १४॥

**ननु** देहधर्मत्वेऽपि पुरुषस्यात्मनो धर्मः किं न स्यात्, तत्राह—

"असङ्गोऽयं पुरुष इति"॥ १५॥

इतिशब्दो हेतुमाह। यतोऽसंगः=न विद्यते संगः=केनापि कथमपि विकारहेतुसंबन्धविशेषो यस्य, स तथायं=प्रत्यगात्मा पुरुष इति=अतोऽवस्थाया देहमात्रधर्मत्वमेव न पुरुषधर्मत्वमित्यर्थः।

अन्यथा देहवत्पुरुषस्यापि परिणामिता स्यादिति भावः॥ १५॥

**ननु** मा भूत् कलादियोगतः पुरुषस्य बन्धः। कर्मणा भविष्यति, तत्राह—

**"न कर्मणाऽन्यधर्मत्वादतिप्रसक्तेश्च" ॥ १६ ॥**

नं=नापि कर्मणा=विहितेन वा निषिद्धेन वा कर्मणा पुरुषस्य बन्धः। कुतः? अन्यधर्मत्वात्=कर्मणस्तस्य पुरुषातिरिक्तदेहादिधर्मत्वात्। अन्यधर्मेणान्यस्य बन्धांगीकारेऽतिप्रसक्तेश्च=अन्यत्वाविशेषादमुक्तस्येव मुक्तस्यापि बन्धापत्तेश्चेत्यर्थः ॥ १६ ॥

दूषणान्तरमाह—

**"विचित्रभोगानुपपत्तिरन्यधर्मत्वे" ॥ १७ ॥**

अपिरनुवर्तते । अन्यधर्मत्वे=बन्धकस्य कर्मणः पुरुषातिरिक्तदेहादिधर्मत्वेऽपि पुरुषबन्धहेतुतायामभ्युपगतायां विचित्रभोगानुपपत्तिः=अनुभूयमानस्य विचित्रस्य=मिथो विलक्षणस्य भोगस्य=पुरुषाणां सुखदुःखानुभवात्मकस्य भोगस्यानुपपत्तिः=अव्यवस्थितिः=संगतिर्न स्यादित्यर्थः ।

**न** ह्यनादिसंसारे केनापि सुखहेतु कर्म वा दुःखहेतु कर्म वा न कृतम् । अन्यधर्मेणान्यत्र कार्य्यजनने तु नियमाभावात् सर्वे सुखिनो वा दुःखिनो वा भाद्युःष्युरिति भावः ॥ १७ ॥

**नन्वस्तु** तर्हि साक्षात्प्रकृतिनिमित्ततः पुरुषस्य बन्ध इत्याशंक्य नेत्याह—

**" प्रकृतिनिबन्धनाच्चेन्न, तस्या अपि पारतन्त्र्यम् "॥१८॥**

ननु प्रकृतिनिबन्धनाच्चेत=साक्षात्प्रकृतिनिमित्ताच्चेत्पुरुषस्य बन्ध इति न । कुतः? यतस्तस्या अपि=प्रकृतेरपि बन्धकतायां पारतन्त्र्यम्=अविवेककृतसंयोगविशेषपराधिनत्वमस्तीत्यर्थः ।

**नहि** प्रकृतिरन्तरेणाविवेककृतसंयोगविशेषं कस्यापि साक्षात=संबन्धसामान्याद्बन्धिका भवति । भवेच्चेत् । तदा तस्या व्यापकतया सामान्यतः सर्वपुरुषसंबन्धाविशेषान्मुक्तस्यापि बन्धः स्यादिति भावः ॥ १८ ॥

**ननु** स्वभावतो वा निमित्ततो वा पुरुषस्य बन्धो नास्ति चेत्तर्हि कस्मात्तस्य बन्धस्तत्राह—

**"न नित्यशुद्धबुद्धमुक्तस्वभावस्य तद्योगस्तद्योगादृते" १९**

नित्यत्वं=कूटस्थनित्यत्वम् । शुद्धत्वं=गुणासंगित्वम् । बुद्धत्वं=अलुप्तचिद्रूपत्वम् । मुक्तस्वभावत्वं=मुक्तशीलत्वम् । न नित्यशुद्धबुद्धमुक्तस्वभावस्य पुरुषस्यात्मनस्तद्योगः=बन्धयोगः=बन्ध इति यावत् तद्योगादृते=अविवेककृतप्रकृतिसंयोगविशेषं विना संभवतीत्यर्थः ।

**अविवेककृतः** प्रकृतिपुरुषसंयोगो बन्धहेतुरिति परमार्थः । तथा चोक्तं समानतन्त्रेऽपि । **यो० पा० २ सू० १७ ।**

**'द्रष्टृदृश्यसंयोगो हेयहेतुः'** इति । प्रकृतिपुरुषसंयोगस्य च बन्धकस्याविवेककृतत्वमग्रे पञ्चपञ्चाशत्तमे सूत्रे वक्ष्यते । तस्मादविवेककृत एव बुद्धिसत्वोपाधिकः पुरुषस्य बन्धो न स्वभावसिद्धो न वा निमित्तजन्य इति भावः ॥ १९ ॥

**ननु** नास्माभिः प्रकृत्यादिबाह्यं वस्त्वन्यदभ्युपगम्यते येनाविवेककृततत्संयोगविशेषादौपाधिकः पुरुषस्य बन्धः स्यात् । किन्तु चित्तापरपर्यायं क्षणिकविज्ञानमेवाद्वितीयं पारमार्थिकमात्मतत्वम् । तस्य च संसारलक्षणः सर्वोऽपि बन्धः सांवृत्तिकः । संवृत्तिरवस्तुभूताऽनिर्वचनीयाऽविद्या तन्मात्रविलसित इति यावदिति बौद्धभेदेषु योगाचाराभिमतं बन्धकारणन्तावन्निराकुरुते ।

**"नाविद्यातोऽप्यवस्तुना बन्धायोगात्" ॥ २० ॥**

अपि शब्दः पूर्वोक्तकालाद्यपेक्षया । तद्योग इत्यनुवर्तते । अविद्यातोऽपि=त्वदभ्युपगतसंवृत्तितोऽपि पुरुषस्य तद्योगः=बन्धयोगो न=न संभवति । कुतः? अवस्तुना=अवस्तुभूतया=मिथ्याभूतयाऽनिर्वचनीयया त्वदभ्युपगतयाऽविद्यया पुरुषस्य बन्धायोगात्=स्वाप्नरज्ज्वेव बन्धानौचित्यादित्यर्थः ।

**इदमत्र बोध्यम्** । यद्यपि वैदिकदर्शनेषु सांख्ययोगन्यायवैशेषिकपूर्वोत्तरमीमांसास्वपि बन्धहेतुतयाऽस्त्यविद्याभ्युपगमः । तथापि सा नेदृशी । यथा सौगतैरभ्युपगम्यते । किन्तु तद्विलक्षणा चित्तधर्मोऽपि वासनारूपेणानादिर्मिथ्याज्ञानलक्षणाऽविवेकापरपर्य्यायैव, इति ॥ २० ॥

ननु नाविद्या सर्वथाऽवस्तु । येन तया बन्धनं न स्यात् । तत्राह–

"वस्तुत्वे सिद्धान्तहानिः" ॥ २१ ॥

वस्तुत्वे=अविद्याया वस्तुत्वे सिद्धान्तहानिः=सिद्धान्तस्य=स्वाभ्युपगतस्य तदनृतत्वस्य हानिः=हानं स्यादित्यर्थः ॥ २१ ॥

दूषणान्तरमाह–

"विजातीयद्वैतापत्तिश्च" ॥ २२ ॥

वस्तुत्वे इत्यनुवर्तते । अविद्याया वस्तुत्वे विजातीयद्वैतापत्तिश्च स्यादित्यर्थः । सन्तानान्तःपातिव्यक्तीनामानन्त्यात्सजातीयद्वैतमिष्यत एवेत्याशयेन विजातीयद्वैतमिति विशेषणमिति भाष्यकृतः ॥ २२ ॥

शंकते–

"विरुद्धोभयरूपा चेत्" ॥ २३ ॥

ननु नाविद्याऽवस्तुभूता । नापि वस्तुभूता । किन्तु विरुद्धोभयरूपा=न वस्तु, नावस्तु=वस्त्ववस्तुविलक्षणेति यावत् । वस्त्ववस्तूभयरूपा वेति चेदित्यर्थः॥२३॥

निराचष्टे–

"न तादृक्पदार्थाप्रतीतेः" ॥ २४ ॥

न=यदुक्तं तन्न । कुतः ? तादृक्पदार्थाप्रतीतेः=जगति तादृशो वस्त्ववस्तुविलक्षणवस्त्ववस्तूभयरूपस्य पदार्थस्याप्रतीतेः=अप्रसिद्धेरित्यर्थः॥२४॥

पुनराशंकते ।

"न वयं षट्पदार्थवादिनो वैशेषिकादिवत्" ॥ २५ ॥

ननु न वयम्=अद्वैतिनोबौद्धा वैशेषिकादिवत्=नैयायिक आदिपदार्थः । कणभक्षाक्षचरणा इव षट्पदार्थवादिनः=उपलक्षणञ्चैतत् षट्षोडशनियतपदार्थवदनशीलाः । तेनाप्रतीतोऽपि मिथ्याभूतोऽविद्यालक्षणस्तादृक्पदार्थोऽभ्युपेतव्य इत्यर्थः ॥ २५ ॥

परिहरति ।

**"अनियतत्वेऽपि नायौक्तिकसंग्रहोऽन्यथाबालोन्मत्ता-दिसमत्वम्" ॥ २६ ॥**

अनियतत्वेऽपि=वैशेषिकादिवत्पदार्थनियमाभावेऽपि नायौक्तिकस्य=युक्तिमसहमानस्य लोकाप्रसिद्धवस्त्ववस्तुविलक्षणवस्त्ववस्तूभयात्मकस्य कस्यचित्पदार्थस्य संग्रहः=स्वीकारो भवद्वचनमात्रादर्हति भवितुम्। अन्यथा=अयौक्तिकस्यापिसंग्रहे बालोन्मत्तादिसमत्वं=व्युत्पत्तिशून्यो बालः। उन्मत्तो विभ्रान्तः। तदादितुल्यत्वं सङ्ग्रहीतुः स्यादित्यर्थः।

**तथा** च लोकाप्रसिद्धमिथ्याभूताविद्यायाः संग्रहासंभवान्न तया पुरुषस्यात्मनोदुःखयोगलक्षणो बन्धः शक्यसंभव इति भावः।

**एतेन** शांकरं मतमप्यपास्तं वेदितव्यम्। तत्रापि योगाचारवदनिर्वचनीयाविद्यया पुरुषस्य बन्धो विद्यया च मोक्ष इत्यभ्युपगमात् ॥ २६ ॥

**ननु** बाह्यं विषयजातमपलपतो योगाचारस्य तादृशाविद्यया क्षणिकविज्ञानात्मनः पुरुषस्य बन्धो माभूत्। अनादिविषयवासनानिमित्ततो भविष्यति। परमाणुपुञ्जात्मनो बाह्यविषयजातस्यावयोः सौत्रान्तिकवैभाषिकयोरङ्गीकारात्, तत्राह—

**"नानादिविषयोपरागनिमित्ततोऽप्यस्य" ॥ २७ ॥**

अस्य=क्षणिकविज्ञानात्मनःपुरुषस्यानादिविषयोपरागनिमित्ततोऽपि=प्रवाहरूपेणानादिर्यो विषयोपरागः=उपरञ्जकस्य बाह्यविषयस्य वासनालक्षणः सम्बन्धविशेषः। तन्निमित्ततोऽपि=तन्निमित्तकोऽपि न=बन्धो नेत्यर्थः।

**मोक्षहेतो**र्भावनाप्रचयस्य स्थिरैकाश्रयाभावेन विशेषानाधायकतया वासनोच्छेदकत्वानुपपत्तौ विगतविषयाकारोपप्लवविशुद्धविज्ञानसन्तानोदयलक्षणमोक्षानुपपत्तेरितिभावः ॥ २७ ॥

**किञ्च—**

**"न बाह्याभ्यन्तरयोरुपरञ्ज्योपरञ्जकभावोऽपि, देशव्यवधानात्, स्रुघ्नस्थपाटलिपुत्रस्थयोरिव" ॥ २८ ॥**

वाह्याभ्यन्तरयोः=विषयविज्ञानयोरुपरञ्ज्योपरञ्जकभावोऽपि=परस्परमुपरञ्जकत्वमुपरञ्ज्यत्वमपि न=न घटते । कुतः ? देशव्यवधानात्=मध्ये शरीररूपदेशेन व्यवधानात् । तत्रोदाहरणम्—स्रुघ्नस्थपाटलिपुत्रस्थयोरिव= यथा स्रुघ्नस्थपाटलिपुत्रस्थयोःपुष्पस्फटिकयोर्देशव्यवधानान्न परस्परमुपरञ्ज्योपरञ्जकभावो घटत इत्यर्थः ।

**यथा** हि वैदिकैरात्मातिरिक्तं चित्तं तद्व्यतिरिक्तञ्च ज्ञानेन्द्रियपञ्चकं जीवात्मनि पुरुषे विषयसमर्पणायाभ्युपगम्यते । न तथा बौद्धैरभ्युपेयते । येन वैदिकानामिव परम्परयाऽप्यात्मनि विषयोपरागःसंभवेत् । ते हि क्षणिकमेव चित्तमात्मा । तस्यैव क्षणिकं विज्ञानं, क्षणिका च बुद्धिरिति नामान्तरम् । ज्ञानेन्द्रियपञ्चकञ्च नगोलकव्यतिरिक्तं विषयसमर्पकमित्यभ्युपयन्ति । तस्मात्तेषां समर्पकान्तराभावेनात्यन्तव्यवहितयोर्देहाभ्यन्तरबाह्यदेशस्थयोश्चित्तचैत्तयोः परस्परमुपरञ्ज्योपरञ्जकभावोऽपि नोपपद्यत इति भावः॥२८॥

**ननु** क्षणिकमपि विज्ञानात्मा चित्तं न देहाभ्यन्तरमेव । किन्तु बहिरन्तःसर्वतः पूर्णमिति न विषयोपरागानुपपत्तिस्तत्राह—

**"द्वयोरेकदेशलब्धोपरागान्न व्यवस्था" ॥ २९ ॥**

एवन्तर्हि क्षणिकविज्ञानवादिनस्ते द्वयोः=बद्धमुक्तात्मनोरुभयोरविशेषेणैकदेशलब्धोपरागात्=भावप्रधानो निर्देशः । एकस्मिन् विषयदेशे लब्धो विषयोपरागो याभ्याम्, तयोर्भावस्तत्त्वम्, तस्मान्न व्यवस्था=बन्धमोक्षव्यवस्था नस्यादित्यर्थः ॥ २९ ॥

**अदृष्टतो** व्यवस्थां चोदयति ।

**"अदृष्टवशाच्चेत्" ॥ ३० ॥**

**ननु** बद्धमुक्तात्मनोर्विषयसंयोगसाम्येऽपि यस्यादृष्टमस्ति, तस्यैवादृष्टवशाद्विषयोपरागलाभोनान्यस्य मुक्तस्यादृष्टाभावादिति न बन्धमोक्षाव्यवस्थेति चेदित्यर्थः ॥ ३० ॥

**भङ्ग्यन्तरेण** दूषयति ।

**"न द्वयोरेककालायोगादुपकार्य्योपकारकभावः"२१॥**

तथापि बौद्धस्य ते चित्तस्यात्मनः क्षणिकत्वाभ्युपगमाद्द्वयोः=अदृष्टस्य कर्तृभोक्तृचित्तात्मनोरेककालायोगात्=समानकालकत्वाभावान्नोपकार्य्योपकारकभावः=न कर्तृचित्तनिष्ठादृष्टेन भोक्तृचित्तनिष्ठो विषयोपरागलक्षण उपकारः संभवतीत्यर्थः ॥ २१ ॥

एककालायोगेऽप्युपकार्य्योपकारकभावं शङ्कते ।

**"पुत्रकर्मवदितिचेत्" ॥ २२ ॥**

**ननु** यथा पितृनिष्ठेन गर्भाधानादिना कर्मणा तद्भिन्नकालकस्य पुत्रस्य संस्कारलक्षण उपकारो भवति, तथाऽत्रापि कर्तृनिष्ठादृष्टेन भोक्तृनिष्ठो विषयोपरागलक्षण उपकारः सेत्स्यतीति चेदित्यर्थः । पुत्रकर्मवत्=तदसमानकालकपितृकृतपुत्रसंस्कारककर्मवदित्यक्षरार्थः ॥ २२ ॥

दृष्टान्तासिद्ध्या परिहरति ।

**"न, अस्ति हि तत्र स्थिर एकात्मा, यो गर्भाधानादिना संस्क्रियते" ॥ २३ ॥**

न=यद्भवतोक्तं, तद्युक्तं न । कुतः ? हि=यस्मात् । तत्र=येषां वैदिकानामुदाहरणं, तेषां सिद्धान्ते । यः=यो जीवात्मा । गर्भाधानादिना=गर्भपात्रशोधनपूर्वकगर्भनिषेको गर्भाधानं, गर्भः शुद्धतयाऽऽधीयतेऽनेनेति तद्व्युत्पत्तेः। तदादौ यस्य संस्कारकर्मणस्तेन संस्क्रियते=सतोऽर्थस्य गुणान्तराधानं संस्कारस्तद्युक्तो विधीयते । सोऽस्ति=विद्यते स्थिरः=स्थास्नुरेकात्मा=एको जीवात्मा पुरुष इत्यर्थः ।

भवत्सिद्धान्ते च स तथा नास्तीत्युदाहरणासिद्धिः । तदसिद्ध्याचादृष्टस्याव्यवस्थापकत्वेन बन्धमोक्षव्यवस्थानुपपत्तौ तदवस्थैव विषयोपरागनिमित्ततोऽप्यस्य बन्धानुपपत्तिरिति भावः ॥ २३ ॥

**अथ** बन्धविषयं बौद्धमतं निराकृत्य 'ग्रामंगच्छन्' इति न्यायेन विशेषतस्तन्मतं निराचिकीर्षुर्वैभाषिकन्तावत्पुनरुत्थापयाति ।

**"स्थिरकार्य्यासिद्धेः क्षणिकत्वम्"** ॥ २४ ॥

**ननु** स्थिरकार्य्यासिद्धेः=स्थिरस्य=स्थायिनः कार्य्यस्य=एकस्यापि भावकार्य्यस्यासिद्धेः=अनुपलब्धेरुदाहरणाभावान्न कस्यापि भावपदार्थस्य स्थिरत्वम् । किन्तु 'यत्सत् तत क्षणिकं ' यथा दीपशिखा, सच्चेदं भावजातमिति भावमात्रस्य क्षणिकत्वं=स्वोत्पत्तिक्षणमात्रावस्थायित्वं=स्वोत्पत्त्यव्यवहितोत्तरक्षणवृत्तिध्वंसमतियोगित्वमित्यर्थः ॥ २४ ॥

दूषयति—

**"न प्रत्यभिज्ञाबाधात्** ॥ २५ ॥

क्षणिकत्वमित्यनुवर्तते । न=कस्यापि भावपदार्थस्य क्षणिकत्वन्न । कुतः ? प्रत्यभिज्ञाबाधात=यदेवाहमद्राक्षं तदेवाहं स्पृशामीति प्रत्यभिज्ञया घटपटादिसर्ववस्तुषु वह्नावनुष्णत्वाभाववत् क्षणिकत्वाभावस्य निश्चयादित्यर्थः २५॥

**ननु** प्रत्यभिज्ञेयं सादृश्यमवलम्बताम् , को दोषस्तत्राह—

**"श्रुतिन्यायविरोधाच्च"** ॥ २६ ॥

नेति पदमनुवर्तते । **'सदेवसोम्येदमग्र आसीत्'** इत्यादिश्रुतिः । **'कथमसतः सज्जायेत'** इत्यादिश्रौतन्यायः । **' असदकरणात् '** इत्यादिस्मार्तन्यायो वा । ताभ्यामसत्त्वप्रतिषेधेन भावमात्रस्य सत्त्वप्रतिपादकाभ्यां विरोधाच्च=क्षणिकत्वानुमानस्य बाधाच्च न प्रत्यभिज्ञेयं सादृश्यावलम्बिनीभवितुमर्हतीत्यर्थः ।

**अथवा** दूषणान्तरमाह—**'श्रुतिन्यायविरोधाच्च'** । हेत्वन्तरापेक्षया चः । न क्षणिकत्वमिति पदद्वयमनुवर्तते । पूर्वोक्तश्रुतिन्यायविरोधाच्च न क्षणिकत्वं कस्यापि भावस्येत्यर्थः ॥ २६ ॥

**ननु** श्रुतिन्यायाभ्यां भावमात्रस्य सत्त्वमवगम्यते, नाक्षणिकत्वम् तच्चास्माकमनुकूलमेव, न प्रतिकूलम् । यत्सत तत् क्षणिकं यथा दीपशिखा । सच्चेदं भावजातमिति प्रयुक्तत्वात्, तत्राह—

---

१ छां०प्रपा०६—खं०२—१ । २ छां०प्रपा० ६—खं०२—१ । ३ सां०का०९।

"दृष्टान्तासिद्धेश्च" ॥ ३७ ॥

न क्षणिकत्वमिति पदद्वयमनुवर्तते। दृष्टान्ते दीपशिखादौ क्षणिकत्वासिद्धेश्च न क्षणिकत्वं कस्याप्यमनुमातुं शक्यमित्यर्थः।

दीपशिखादौ हि सूक्ष्मानेकक्षणानाकलनमात्रेण क्षणिकत्वभ्रमो न परमार्थतस्तथात्वमिति भावः ॥ ३७ ॥

किञ्च क्षणिकत्ववादे कार्य्यकारणभावोऽपि न संभवतीत्याह–

"युगपज्जायमानयोर्न कार्य्यकारणभावः" ॥ ३८ ॥

युगपज्जायमानयोर्वा क्रमिकयोर्वा कार्य्यकारणभावो वक्तव्यः। तत्र युगपज्जायमानयोर्मृद्घटयोः सव्येतरविषाणयोरिव न कार्य्यकारणभावः शक्यसंभव इत्यर्थः।

कारणस्य कार्य्यनियतपूर्ववृत्तित्वनियमादिति भावः ॥ ३८ ॥

अथ क्रमिकयोरिति चेत्, तत्राह–

"पूर्वापाये उत्तरायोगात्" ॥ ३९ ॥

न कार्यकारणभाव इत्यनुवर्तते। क्रमिकयोरपि कार्य्यकारणभावो न संभवति। कुतः? पूर्वापाये=पूर्वं कारणं, तदपायवेलायामुत्तरायोगात्=उत्तरस्य कार्य्यस्योत्पत्तेरनौचित्यादित्यर्थः।

नहि मृदपाये घट उत्पद्यते। कार्य्यस्योपादानकारणानुगततयैवानुभवादिति भावः ॥ ३९ ॥

किञ्च–

"तद्भावे तदयोगादुभयव्यभिचारादपि न" ॥ ४० ॥

कार्य्यकारणभाव इत्यनुवर्तते। भावमात्रस्य क्षणिकतया तद्भावे=तयोः पूर्वोत्तरयोः कारणकार्य्ययोर्भावे=सत्त्वे। तदयोगात्=तयोरुत्तरपूर्वयोः कार्य्यकारणयोरयोगात्=असत्वादुभयव्यभिचारादपि=उभयोरन्वयव्यतिरेकयोःकार्यकारणभावनियामकयोर्व्यभिचारादपि। न=कार्यकारणभावो नेत्यर्थः।

अन्वयव्यतिरेकव्यभिचारस्यैव कार्य्यकारणभावविघटकत्वादिति भावः ॥ ४० ॥

ननु निमित्तकारणस्येवोपादानकारणस्यापि पूर्वभावमात्रेणैव कारणत्वमस्तु किं तस्य कार्य्यकाले सत्वेन, तत्राह—

**" पूर्वभावमात्रे न नियमः " ॥ ४१ ॥**

पूर्वभावमात्रे=उपादानकारणस्य कार्य्यापेक्षया पूर्वभावमात्रेऽभ्युपगम्यमाने न नियमः=इदमेवोपादानकारणं नेदमिति नियमो न स्यादित्यर्थः ।

निमित्तकारणस्यापि पूर्वभावाविशेषादिति भावः ॥ ४१ ॥

योगाचारमतं निरस्यति ।

**" न विज्ञानमात्रं बाह्यप्रतीतेः " ॥ ४२ ॥**

विज्ञानमात्रं=विज्ञानमेव । न=तत्त्वं न । कुतः ? बाह्यप्रतीतेः=विज्ञानवद् बाह्यार्थानामपि प्रतीतेरित्यर्थः ॥ ४२ ॥

ननु स्वाप्नप्रतीतिरिवास्तु बाह्यप्रतीतिस्तत्राह—

**" तदभावे तदभावाच्छून्यन्तर्हि " ॥ ४३ ॥**

तर्हि=बाह्यार्थाभावे शून्यं=शून्यमेव प्रसज्येत । कुतः ? तदभावे=तस्य बाह्यार्थस्याभावे । तदभावात्=विज्ञानस्याप्यभावादित्यर्थः ।

नास्ति निर्विषयं किमपि विज्ञानम् । स्वप्नेऽप्यर्थानामभ्युपगमादिति भावः ॥ ४३ ॥

शून्यवादिनमुत्थापयति ।

**"शून्यं तत्वं, भावो विनश्यति, वस्तुधर्मत्वाद्विनाशस्य" ॥ ४४ ॥**

अस्तु तर्हि शून्यं तत्त्वं=शून्यमेवैकं तत्वम् । कुतः ? यतो भावो विनश्यति=यो यो भावः स सर्वो विनश्यत्येव । कस्मात् ? विनाशस्य वस्तुधर्मत्वात्=वस्तुनो=भावमात्रस्य धर्मत्वात्=स्वभावत्वादित्यर्थः ।

स्वभावस्तु निरनियोज्य इति भावः ॥ ४४ ॥

प्रत्याह—

"अपवादमात्रमबुद्धानाम्" ॥ ४५ ॥

अबुद्धानाम्=अज्ञातशास्त्रतत्त्वानां शून्यवादिनां माध्यमिकानामपवादमात्रं= 'यो यो भावः स सर्वो विनश्यत्येव' इत्यपवादमात्रम्=अपवादो मिथ्याभवादस्तन्मात्रमित्यर्थः।

निरवयवभावानां विनाशासंभवादिति भावः ॥ ४५ ॥

किन्तर्हि विधेयं ? तत्राह—

" उभयपक्षसमानक्षेमत्वादयमपि " ॥ ४६ ॥

उभयपक्षसमानक्षेमत्वात्=सौत्रान्तिकवैभाषिकयोर्द्वयोःक्षणिकबाह्यार्थस्तावदेकः पक्षः। तद्भिन्नस्य च तृतीयस्य योगाचारस्य क्षणिकविज्ञानमात्रं द्वितीयः पक्षः। तदेतदुभाभ्यां पक्षाभ्यां समानः=तुल्यः क्षेमः= रक्षणम्=तत्तन्निरासकहेतुभिर्निरसनकोटौ व्यवस्थापनं यस्य पक्षस्य। स तथा। तस्य भावस्तत्त्वं तस्मात्=तुल्यनिरसनहेतुकत्वादयमपि=माध्यमिकानां तुरीयः शून्यपक्षोऽपि तदुभयपक्षवत्परित्याज्य इत्यर्थः।

नहि सर्वं शून्यमित्यभ्युपगमे'यदेवाहमद्राक्षं, तदेवाहम्' इत्यादिप्रत्यक्ष प्रत्यभिज्ञा " घटोऽयं पटोऽयमित्यादिप्रत्यक्षाभिज्ञा वा कथञ्चिदुपपद्यते। तस्मात्तदनुपपत्तिरेव क्षणिकबाह्यविज्ञानपक्षयोरिव तन्निरासे हेतुः। तन्निरस्यत्वाच्च तदुभयवदयमपि परिहेय इति भावः ॥ ४६ ॥

ननु नायं परित्याज्यः दुःखनिवृत्तितत्साधनयोरेकरूपत्वात् तत्राह—

" अपुरुषार्थत्वमुभयथा " ॥ ४७ ॥

अपिरनुवर्तते। शून्यस्येति विपरिणम्यान्वयः। उभयथापि=प्रकारद्वयेनाप्यपुरुषार्थत्वं=शून्यस्य पुरुषार्थत्वं न संभवतीत्यर्थः।

आत्मनः शून्यभावो दुःखनिवृत्तिरूपतया तत्साधनरूपतया वा

पुरुषार्थो नोपपद्यते । सर्वथाऽनिष्टत्वात् । तस्मात्परित्याज्य एवायं पक्ष इति भावः ॥ ४७ ॥

**ननु** क्षणिकबाह्यार्थविज्ञानमात्रशून्यानां बौद्धपक्षाणामयुक्तत्वान्माभूत्तदभ्युपगतविषयोपरागादितः पुरुषस्य बन्धो, गतिविशेषात्स तस्य भविष्यति तत्राह—

**" न गतिविशेषात् " ॥ ४८ ॥**

पुरुषस्य बन्ध इति प्रकरणलाभः । न गतिविशेषात्=दिव्यादिव्यशरीरप्रवेशादि लक्षणाद्गतिभेदात्पुरुषस्य बन्धो नेत्यर्थः ॥ ४८ ॥

**अत्र** हेतुमाह—

**" निष्क्रियस्य तदसम्भवात् " ॥ ४९ ॥**

निष्क्रियस्य=क्रियापरिणामरहितस्यतदसंभवात=गत्यसंभवादित्यर्थः॥४९॥

**ननु** पुरुषस्यमध्यमपरिमाणत्वमभ्युपगम्यते, न तेन तदसम्भवः, तत्राह—

**"मूर्तत्वाद्घटादिवत्समानधर्मापत्तावपसिद्धान्तः"॥५०॥**

*घटादिवत्=यथा घटादेर्मूर्तत्वात्=मध्यमपरिमाणत्वात्सावयवत्वादिधर्म*वत्वं, तथा पुरुषस्यापिमूर्तत्वात्समानधर्मापत्तौ=घटादितुल्यसावयवत्वादिधर्मप्राप्तौ सत्यामपसिद्धान्तः=सिद्धान्तस्य=स्वाभ्युपगतस्य पुरुषनित्यत्वस्यापगतिः=हानिः स्यादित्यर्थः ॥ ५० ॥

**ननु** निष्क्रियश्चेत् पुरुषः, तदा तस्य गतिप्रतिपादिका श्रुतिस्तवापि कथमुपपद्येत, तत्राह=

**" गतिश्रुतिरप्युपाधियोगादाकाशवत् " ॥ ५१ ॥**

त्वयोऽपि, पुरुषस्येति प्रकरणलाभः गतिश्रुतिरपि= **"पुण्येन पुण्यं लोकं नयति, पापेन पापम्'** इत्यादिकागतिश्रुतिस्तूपाधियोगात्=

१ प्रश्नो ०२—७।

बुद्धिसत्त्वलक्षणोपाधिसम्बन्धात पुरुषस्यगमनागमनप्रतिपादकतयोपपद्यते, तत्रोदाहरणमाकाशवत्=यथानिष्क्रियस्याकाशस्यघटोदश्वनाद्युपाधिसम्बन्धात्तद्गमनेनगमनं तदागमनेनचागमनमित्यर्थः । तत्राकाशंविभु, पुरुषश्चाणुरित्युदाहरणोदाहरणिकयोर्वैधर्म्यम् निष्क्रियत्वश्चतयोःसाधर्म्यम्,उपाधिगमनागमनाभ्यामुपधेयगमनागमनमात्रे चोदाहरणमिति विवेकः ॥५१॥

नन्वस्तु तर्हि कर्मजन्यादृष्टेन बन्धः, तत्राह–

" न कर्मणाप्यतद्धर्मत्वात् " ॥ ५२ ॥

कर्मणापि=कार्य्ये कारणोपचारः। कर्मजन्यादृष्टेनापि न=पुरुषस्य बन्धो न । कुतः ? अतद्धर्मत्वात=अदृष्टस्य तद्धर्मत्वाभावादित्यर्थः ।

पूर्वं विहितनिषिद्धव्यापाररूपेण कर्मणा बन्धो निराकृतः । अत्र तु तज्जन्यादृष्टेनेत्यार्थिकविभागादपौनरुक्त्यमिति भाष्यम् ॥ ५२ ॥

नन्वन्यधर्मेणाप्यन्यस्य बन्धः स्यात्, तत्राह–

" अतिप्रसक्तिरन्यधर्मत्वे " ॥ ५३ ॥

अन्यधर्मत्वे=बन्धतत्कारणयोर्भिन्नधर्मत्वेऽतिप्रसक्तिः=मुक्तस्यापिबन्धापत्तिरित्यर्थः ॥ ५३ ॥

नन्वस्त्वदृष्टं पुरुषस्यैव धर्मः को विरोधः ? तत्राह–

" निर्गुणादिश्रुतिविरोधश्चेति " ॥ ५४ ॥

इति शब्दो बन्धकारणपरीक्षासमाप्तिमाह । अदृष्टस्य पुरुषधर्मत्वे '**असंगो ह्ययं पुरुषः**'[1] इति गुणसङ्गप्रतिषेधेन निर्गुणतादिप्रतिपादकश्रुतिविरोध एव स्यादित्यर्थः ।

भाष्यकृतस्तु–'**साक्षी चेता केवलो निर्गुणश्च**'[2] इत्यादिश्रुतिविरोधश्चेत्यर्थः इत्याहुः । तन्न युक्तम् । उक्तश्रुतेरीश्वरविषयत्वात्।'**निर्गुणत्वमात्मनोऽसङ्गत्वादिश्रुतेः**'[3] इत्यग्रिमसूत्रविरोधाच्च ॥५४॥

---

१ बृ०अ० ६ ब्रा० ३–१५ । २ श्वेताश्व० अ० ६ मं० ११ । ३ सां० अ० ६ सू० १० ।

ननु योऽयमेकोनविंशसूत्रे प्रकृतियोगः पुरुषस्य बन्धहेतू राद्धान्तितः सोऽपि न संगच्छते।कालादियोगवत्तस्यापि मुक्तबद्धयोः समानत्वात्।तत्राह—

**"तद्योगोऽप्यविवेकान्न समानत्वम्" ॥ ५५ ॥**

पुरुषस्येति संबन्धः । तद्योगोऽपि=तच्छब्दः प्रकृतिमाह । पुरुषस्य प्रकृतियोगोप्यविवेकात्=निमित्तत्वं पञ्चम्यर्थः । अगृहीतासंसर्गकं प्रकृतिपुरुषोभयविषयकं बुद्धिवृत्त्यात्मकं विपर्य्ययज्ञानमविवेकः=अविद्यास्थलाभिषिक्तसत्त्वपुरुषानन्यताप्रत्यय इति यावत । तस्मात्=तन्निमित्तक इति यावत् । अतो न समानत्वं=प्रकृतिसंयोगस्य मुक्तबद्धयोः कालादियोगवत्तुल्यत्वं नेत्यर्थः ।

मुक्तानामविवेकाभावादिति भावः ।

यथा च बुद्धिधर्मोऽप्यनादिरयमविवेकस्तथाग्रे विस्पष्टयिष्यते ॥५५॥

नन्वविवेकस्यास्योच्छेदः कथं स्यात्, येन मोक्षो भवेत्, तत्राह—

**"नियतकारणात्तदुच्छित्तिर्ध्वान्तवत्" ॥ ५६ ॥**

नियतकारणात्=नियतम्=अविवेकनाशकतया शुक्तिरूप्यादिभूमौ निश्चितं यत्कारणं=विवेकप्रत्ययलक्षणं कारणं तस्मात्तदुच्छित्तिः=तस्याविवेकस्योच्छित्तिः=उच्छेदः=हानमिति यावत् । तत्रोदाहरणं ध्वान्तवत्=यथा ध्वान्तस्य=तमसो नियतकारणादालोकादुच्छित्तिरित्यर्थः ।

तदुक्तं योगशास्त्रेऽपि । स० पा० सू० २६ । '**विवेकख्यातिरविप्लवा हानोपाय इति**'।विवेकेनाविवेकनिवृत्तौ तन्निबन्धनः प्रकृतिपुरुषसंयोगविशेषोऽपि निवर्तते । तन्निवृत्तौ च तत्प्रयुक्तदुःखात्यन्तानिवृत्तिलक्षणो मोक्ष इति द्रष्टव्यम् ॥ ५६ ॥

ननुप्रकृतिपुरुषविवेकेन प्रकृतिपुरुषाविवेकोच्छेदेऽप्यन्याविवेकानुच्छेदात कथं मोक्षः स्यात ? तत्राह—

**"प्रधानाविवेकादन्याविवेकस्य तद्धाने हानम्"॥५७॥**

प्रधानाविवेकात्=प्रधानस्य मूलप्रकृतेरविवेकात्=पूर्वोक्तलक्षणादविवेका-त्पुरुषेऽन्याविवेकस्य=कार्य्यभूतमहत्तत्वाद्याविवेकस्य संभव इति शेषः । अतस्तद्धाने=तस्य प्रधानाविवेकस्य हाने=सम्यगुच्छेदे हानम्=अन्याविवेक-स्याप्युच्छेद इत्यर्थः ।

कारणनाशे कार्य्यनाशस्यावश्यकत्वान्न मोक्षानुपपत्तिरिति भावः ॥५७॥

ननु विवेकप्रत्ययेन मोक्षाभ्युपगमे बन्धादेरवश्यं वक्तव्यतया पुरुषस्य नित्यशुद्धबुद्धमुक्तस्वभावत्वं न स्यात्, तत्राह—

"वाङ्मात्रं न तु तत्त्वं, चित्तस्थितेः" ॥ ५८ ॥

माङ्मात्रं=मोक्षान्तं सर्वं बन्धादिकं पुरुषे वाङ्मात्रं=स्फटिके लौहित्यव-द्वाचारम्भणमात्रं, नतु तत्वं=पुष्पेलौहित्यवद्वास्तवम् । कुतः ? चित्तस्थितेः= पुष्पेलौहित्यवत्सर्वेशं बन्धादीनां चित्त एवावस्थानादित्यर्थः ।

तथा च चित्तस्थितानामेव बन्धमोक्षविवेकाविवेकसुखदुःखप्रभृतीनां तत्सन्निधानात्पुरुषे प्रतिभासो न तु स्वत इति न तस्य नित्यशुद्धबुद्धमुक्त-स्वभावत्वहानिरिति भावः ॥ ५८ ॥

ननु बन्धादीनां पुरुषे वाङ्मात्रत्वे श्रवणतो मननतो वा बाधो भविष्यति । किं श्रुतिस्मृत्योः साक्षात्कारपर्यन्तेन मोक्षहेतुविवेकप्रत्ययोपदेशेन ? तत्राह—

"युक्तितोऽपि न बाध्यते दिङ्मूढवदपरोक्षादृते"॥५९॥

वाङ्मात्रमित्यनुवर्तते । वाङ्मात्रमपि पुरुषस्य बन्धादिकं सर्वमपरो-क्षादृते=विवेकसाक्षात्कारं विना युक्तितोऽपि न बाध्यते=श्रवणतो न बाध्यते इति किमुवक्तव्यम् ? युक्तितोऽपि=युक्तिर्मननं ततोऽपि न बाध्यते=न निव-र्त्यते । तत्रोदाहरणं दिङ्मूढवत्=यथा दिङ्मूढस्य पुरुषस्य वाङ्मात्रमपि दिग्वैपरीत्यं दिक्साक्षात्कारं विना श्रवणमननाभ्यां न बाध्यते, तथेत्यर्थः ।

अपरोक्षभ्रमेणापरोक्षविशेषदर्शनस्यैव विरोधादिति भावः ॥ ५९ ॥

ननु येभ्यः प्रकृत्यादिभ्यः पुरुषस्य विवेकप्रत्ययो मोक्षैकसाधनमुपदि-श्यते । तत्सिद्धिः कथं स्यात् ? तत्राह—

**"अचाक्षुषाणामनुमानेन बोधो धूमादिभिरिव वह्नेः" ।६०।**

अचाक्षुषाणां=स्थूलभूतानि, तत्कार्यभूता देहादयश्च चाक्षुषा एव । न तत्साधनापेक्षा । ये चाचाक्षुषाः=चक्षुषा ग्रहणायोग्याः=अप्रत्यक्षा इति यावत् । तेषामनुमानेन=अनुमानप्रमाणेन बोधः=सिद्धिर्भवतीति शेषः । तत्रोदाहरणं धूमादिभिरिव वह्नेः=यथा धूमादिभिर्जनितेनानुमानेन वह्नेः सिद्धिरित्यर्थः ॥ ६० ॥

ननु किं तदनुमानं येनाचाक्षुषाणां बोध इत्याशंक्य सामान्यतो दृष्टं कार्य्यलिङ्गकानुमानं तत्र प्रदर्शयितुं पूर्वन्तावत्प्रकृत्यादीनां तेषां मिथः कार्यकारणभावमाह—

**"सत्त्वरजस्तमसां साम्यावस्था प्रकृतिः १ प्रकृतेर्महान् १ महतोऽहङ्कारः १ अहङ्कारात्पञ्चतन्मात्राण्युभयमिन्द्रियं १६ तन्मात्रेभ्यः स्थूलभूतानि ५ पुरुषः १ इति पञ्चविंशतिर्गणः" ॥ ६१ ॥**

सत्त्वरजस्तमाँसि द्रव्याणि । नतु गुणाः । संयोगविभागलघुत्वचलत्वगुरुत्वादिधर्मकत्वात् । गुणशब्दप्रयोगस्तु तत्र रज्जुसाम्यात्पुरुषबन्धनहेतुतयौपचारिकः । तेषां त्रयाणां या साम्यावस्था=अन्यूनानतिरिक्तावस्था=न्यूनाधिकभावेनासंहितावस्था, सा प्रकृतिः=प्रधानम् । वस्तुतस्त्वकार्य्यावस्थोपलक्षितं गुणसामान्यं प्रकृतिः । यथाश्रुते वैषम्यावस्थायां प्रकृतिनाशप्रसंगादिति । महान्=महत्तत्वं=बुद्धितत्त्वमिति यावत् । अहङ्कारः=अभिमानवृत्तिको बुद्धितत्त्वावस्थाभेदः । शब्दस्पर्शरूपरसगन्धाः पञ्च तन्मात्राणि । बाह्यमाभ्यन्तरश्चेन्द्रियमुभयमिन्द्रियम् । तत्रश्रोत्रत्वक्चक्षुर्जिह्वाघ्राणाख्यानि । वाक्पाणिपादपायूपस्थाख्यानि च ज्ञानकर्मेन्द्रियाणि दश बाह्यमिन्द्रियम् । मनश्चैकमाभ्यन्तरमिन्द्रियम् । व्योमानिलज्योतिरुदकभूमयः पञ्च स्थूलभूतानि । सर्वत्रात्रोपादाने पञ्चमी । तदुपरिष्टादुत्पद्यत इतिपदं शेषणीयम् ।

पुरुषोऽत्र जीवेश्वरोभयपरः । स तु न कस्य चित्कार्य्यं नापि कारणम् । तस्येह ग्रहणं सांख्याभ्युपगततत्त्वसंख्यापरिपूर्णार्थम् । इति=इत्येवं पञ्चविंशतिः=पञ्चविंशतिसंख्याको गणः=तत्त्वव्यूहः कापिलानामित्यर्थः ।

गुणकर्मसामान्यादयो वैशेषिकोक्ताः शक्तिसादृश्यादयो मीमांसकोक्ताश्च नातिरिक्ताः पदार्थाः। किंतु धर्मधर्म्यभेदादत्रैवान्तर्भूताः। दिक्कालौ चाकाशमेव। **'दिक्कालावाकाशादिभ्यः'** इत्यागामिसूत्रात् । अभावस्तु धर्मिस्वरूप एवाभ्युपगम्यते नार्थान्तरमिति न काचन न्यूनता । तत्र प्रकृतित्वञ्च तत्त्वान्तरोपादानत्वमित्यध्यवसेयम् ॥ ६१ ॥

**नन्वस्त्वेवं** प्रकृत्यादीनां कार्य्यकारणभावः । तथापि कस्मात्कार्य्यात्कस्य कारणस्यानुमानेन बोधस्तत्राह—

**" स्थूलात्पञ्चतन्मात्रस्य "** ॥ ६२ ॥

अनुमानेन बोध इत्यनुवर्तते । स्थूलात्=बाह्येन्द्रियग्राह्यगुणवत्त्वं, शान्तघोरमूढरूपत्वं वा स्थूलत्वम् । तदाश्रयात्पृथिव्यादिस्थूलभूतपञ्चकात्कार्य्यात् पञ्चतन्मात्रस्य=गन्धादिपञ्चतन्मात्रस्यतत्कारणस्यानुमानेन=यत्कार्य्यं, तत्कारणपूर्वकमिति व्याप्तिमता सामान्यतोदृष्टानुमानेन बोधः=सिद्धिरित्यर्थः ॥ ६२ ॥

**" बाह्याभ्यन्तराभ्यां तैश्चाहङ्कारस्य "** ॥३६ ॥

अनुमानेन बोध इत्यनुवर्तते । बाह्याभ्यन्तराभ्यां=मनआदिज्ञानकर्मेन्द्रियाभ्यां कार्य्याभ्याम् । तैश्च=स्थूलभूतकारणैः शब्दादिपञ्चतन्मात्रैश्च कार्य्यैरहङ्कारस्य=कारणभुताहङ्कारप्रकृतेरनुमानेन बोध इति पूर्ववत् ॥ ६३ ॥

**" तेनान्तःकरणस्य "** ॥ ६४ ॥

अनुमानेन बोध इत्यनुवर्तते । तेन=अहङ्कारेण कार्य्येणान्तःकरणस्य=महत्तत्त्वाख्यायाः कारणभूताया बुद्धेरनुमानेन बोध इति पूर्ववत् ।

**इदमत्र बोध्यम्** । यद्यप्यन्तःकरणं मनोबुद्धिश्चित्तमहङ्कार इति चतुष्टयम्, तथापि बुद्धिसत्त्वावस्थाविशेषत्वान्न तत्परमार्थतो बुद्धिसत्त्वव्यतिरिक्तम्,

बुद्धिसत्त्वमेव हि तत्तदवस्थाविशेषमापन्नं तत्तन्नाम्ना व्यपदिश्यते । यदा संकल्पयति तदा मनः । यदाऽध्यवस्यति तदा बुद्धिः । यदा चिन्तयति तदा चित्तम् । यदाऽहंकरोति तदाऽहंकार इत्यभिधीयते । अवस्थाऽवस्थावतोश्च भेदाभेदाभ्युपगमाच्चतुष्टयत्वे सत्यप्युक्तमन्तःकरणं बुद्धिरिति ॥ ६४ ॥

"ततः प्रकृतेः" ॥ ६५ ॥

अनुमानेन बोध इत्यनुवर्तते । ततः=अन्तःकरणात्कार्यात्प्रकृतेः=सर्वकारणभूताया मूलप्रकृतेरनुमानेन बोध इति पूर्ववत् ॥ ६५ ॥

ननु प्रकृत्यन्तानां तत्त्वानां मिथः कार्य्यकारणभावादनुमानेन सिद्धिरस्तु । कार्य्यकारणभावशून्यः पुरुषो जीवः पुनःकथं सिध्येत् ? तत्राह—

"संहतपरार्थत्वात्पुरुषस्य" ॥ ६६ ॥

अनुमानेन बोध इत्यनुवर्तते । संहतपरार्थत्वात्=संहतानां=परस्परमिलितानांप्रकृतितत्कार्य्याणां परार्थत्वात्=स्वेतरभोगापवर्गप्रयोजनकत्वं परार्थत्वम्। तस्मात्=परप्रयोजनकत्वात्पुरुषस्य=प्रकृत्यादिभ्यः परस्य भोक्तुः पुरुषस्यानुमानेन=ये ये संहताः पदार्थास्ते सर्वे शय्यासनादिवत्परार्थाः संहतश्च प्रकृतितत्कार्य्यमिति सामान्यतोदृष्टानुमानेन बोधः=सिद्धिरित्यर्थः ।

संहननमारम्भकसंयोगः ।स चावयवावयव्यभेदात्प्रकृतिकार्य्यसाधारणः। तथा च संहतानां प्रकृतितत्कार्य्याणामिति भाष्यम् ॥ ६६ ॥

ननु महदादिवन्मूलप्रकृतेरपि किञ्चिन्मूलान्तरं सिध्येत्, तत्राह—

"मूलेमूलाभावादमूलं मूलम्" ॥ ६७ ॥

मूलं=महदादित्रयोविंशतितत्वानां मूलकारणं प्रधानं=प्रकृतिरमूलं=मूलान्तरवर्ज्यम् । कुतः ? मूले=मूलकारणे तस्मिन् मूलाभावात्=मूलस्य प्रकृत्यन्तरस्याभ्युपगमाभावादित्यर्थः ॥ ६७ ॥

ननु हेतुना सिद्धौ किमभ्युपगमाभावेन ? तत्राह—

" पारम्पर्य्येऽप्येकत्र परिनिष्ठेति संज्ञामात्रम् " ॥ ६८ ॥

पारम्पर्य्येऽपि=प्रकृतेः प्रकृत्यन्तरम्। तस्यापि प्रकृत्यन्तरमित्येवं प्रकृतिपारम्पर्य्ये सिद्धेऽप्येकत्र=अन्ततोगत्वा यस्मिन् कस्मिँश्चिदेकस्मिन् प्रकृत्यन्तरे परिनिष्ठा=पर्यवसानं वक्तव्यम्। अन्यथाऽनवस्थापत्तेः। यत्र वः परिनिष्ठा, सैवास्माकं मूलप्रकृतिरिति= अतः संज्ञामात्रं=विवादास्पदं केवलमिहावयोर्नाममात्रं स्यादित्यर्थः ॥ ६८ ॥

ननु कुत एतत् ? तत्राह—

" समानः प्रकृतेर्द्वयोः " ॥ ६९ ॥

यत इति शेषः। यतो द्वयोः=वादिप्रतिवादिनोरावयोः प्रकृतेः=मूलकारणस्य समानः=अभ्युपगमस्तुल्य इत्यर्थः ॥ ६९ ॥

नन्वेवं प्रकृतिपुरुषादीनामनुमानतः सिद्धौ सुकरोऽयं विवेकप्रत्ययः शास्त्रश्रवणादेव सर्वेषां किं न स्यात् ? तत्राह—

" अधिकारित्रैविध्यान्न नियमः " ७० ॥

अधिकारित्रैविध्यात्=मन्दमध्यमोत्तमभेदेनाधिकारिणां त्रिप्रकारत्वान्ननियमः=शास्त्रश्रवणमात्रेण सर्वेषां दृढविवेकप्रत्ययोदयनियमो नेत्यर्थः॥७०॥

ननु ' प्रकृतेर्महान् ' इत्येकाधिकषष्टितमसूत्रेण प्रकृत्यादीनां कार्य्यकारणभाव एव प्रतिपादितो नतु क्रम इति भ्रमसंभवात्किं तत्राद्यं कार्य्यं किञ्च तदनन्तरमिति कथं विज्ञेयं ! तत्राह—

" महदाख्यमाद्यकार्य्यं तन्मनः " ॥ ७१ ॥

महदाख्यं=महत्तत्त्वनामकमाद्यं कार्य्यं=प्रकृतेः प्रथमं कार्य्यं विज्ञातव्यम् तन्मनः=तदेव च महदाख्यं तत्त्वं मननवृत्तिकत्वान्मनः=मननमत्र निश्चयस्तद्वृत्तिकं बुद्धिसत्त्वमित्यर्थः ॥ ७१ ॥

" चरमोऽहङ्कारः " ॥ ७२ ॥

चरमः=महत्तत्त्वानन्तरस्तत्कार्य्यभेदोऽहंकारः=अहंवृत्तिकस्तत्त्वविशेष इत्यर्थः ॥ ७२ ॥

"तत्कार्य्यत्वमुत्तरेषाम्" ॥ ७३ ॥

तत्कार्य्यत्वम्=अहंकारकार्य्यत्वमुत्तरेषाम्=एकादशेन्द्रियपञ्चतन्मात्राणामित्यर्थः ।

पञ्चतन्मात्रकार्यत्वं भूतानामित्यपि द्रष्टव्यम् ॥ ७३ ॥

नन्वेवं चेत् कार्य्यकारणभावक्रमः, तदा प्रकृतिर्हेतुकं सर्वमिति कथमुपपद्येत ! तत्राह—

"आद्यहेतुता तद्वारा पारम्पर्य्येऽप्यणुवत्" ॥ ७४ ॥

पारम्पर्येऽपि=साक्षादहेतुत्वेऽपि तद्वारा=महदादिद्वाराऽऽद्यहेतुता=आद्यस्य मूलकारणस्य प्रधानस्य हेतुता=सर्वत्र कारणताऽस्त्येव । तत्र निदर्शनमणुवत्=यथा वैनाशिकसमयेऽणूनां=परमाणूनां द्व्यणुकादिद्वारा सर्वत्र सङ्घातेषु हेतुतेत्यर्थः ॥ ७४ ॥

ननु प्रकृतिपुरुषयोरुभयोर्नित्यत्वेन निखिलकार्यपूर्वभावित्वसाम्येऽपिकथं प्रकृतिरेव जगतः कारणं न पुरुषः? तत्राह—

" पूर्वभावित्वे द्वयोरेकतरस्य हानेऽन्यतरयोगः " ॥ ७५ ॥

द्वयोः=पुम्प्रकृत्योरुभयोःपूर्वभावित्वे=अपिरनुवर्तते निखिलकार्य्यपूर्वभावित्वसाम्येऽप्येकतरस्य=द्वयोरेकस्य पुरुषस्य हाने=अपरिणामित्वेन कारणत्वासंभवेऽन्यतरयोगः=अन्यतरस्य पुरुषभिन्नस्य प्रधानस्यैव कारणतायोग इत्यर्थः ॥ ७५ ॥

ननु प्रकृतिव्यतिरिक्तं किञ्चिदेकं परिच्छिन्नं जगतःकारणं कल्प्यतां, किंकल्पितया महत्या प्रकृत्या, तत्राह—

"परिच्छिन्नं न सर्वोपादानम्" ॥ ७६ ॥

परिच्छिन्नं=यदेकदेशि, तत्सर्वोपादानं=यत्किञ्चिदुपादानं भवदपि महदादिसर्ववस्त्वात्मकजगदुपादानकारणं न=न संभवति । परिच्छिन्नत्वान्मृदादिवदिति शेष इत्यर्थः ॥ ७६ ॥

तत्रैव हेत्वन्तरमाह—

"तदुत्पत्तिश्रुतेश्च" ॥ ७७ ॥

पूर्वसूत्रमनुवर्तते 'तद्धेदं तर्ह्यव्याकृतमासीत्तन्नामरूपाभ्यामेव व्याक्रियत'[1]इत्यादिना प्रकृतेः सकाशात्तद्व्यतिरिक्तस्य सर्वस्य तस्य परिच्छिन्नस्योत्पत्तिश्रवणाच्च न परिच्छिन्नं सर्वोपादानं संभवतीत्यर्थः ॥७७॥

नन्वस्तु तर्ह्यभाव एव जगतः कारणमपरिच्छिन्नत्वात्, तत्राह—

"नावस्तुनो वस्तुसिद्धिः" ॥ ७८ ॥

अवस्तुनः=अभावाद् वस्तुसिद्धिः=वस्तुनः=भावस्य सिद्धिः=उत्पत्तिर्न=न संभवतीत्यर्थः ।

कार्य्यकारणयोः सारूप्यस्यैव लोके दर्शनादिति भावः ॥ ७८ ॥

ननु तत्कार्य्यं जगदपि शुक्तिरजतादिवदवस्त्वेवास्तु, तत्राह—

"अबाधाददुष्टकारणजन्यत्वाच्च नावस्तुत्वम्" ॥७९॥

अबाधात्=शुक्तिरजतादिवद् बाधाभावाददुष्टकारणजन्यत्वाच्च=शंखपीतिमादिवद्दुष्टकारणजन्यत्वाभावाच्च नावस्तुत्वं=जगतोऽवस्तुत्वं नेत्यर्थः॥७९॥

नन्वेवञ्चेत्तदाऽवस्तुनस्तस्माद् वस्तुभूतमेव जगदुत्पद्यतां, तत्राह—

"भावे तद्योगेन तत्सिद्धिरभावे तदभावात्कुतस्तरां तत्सिद्धिः" ॥ ८० ॥

भावे=कारणस्य भावरूपत्वे तद्योगेन=तस्य भावरूपकारणस्य सबन्धेन तत्सिद्धिः=तस्य भावरूपकार्य्यस्य सिद्धिः=उत्पत्तिः संभवति। सतोः संबन्धोपपत्तेरिति शेषः । अभावे=कारणस्याभावरूपत्वे पुनस्तदभावात्=तद्योगासंभवात्कुतस्तरां तत्सिद्धिः=तस्य भावरूपकार्य्यस्य जगतः सिद्धिः=उत्पत्तिः संभवेदित्यर्थः ॥ ८० ॥

नन्वस्तु तर्हि कर्मैव जगतः कारणम् । आवश्यकत्वात्, तत्राह—

"न कर्मण उपादानत्वायोगात् ॥ ८१ ॥

---

१ बृ० अ १ ब्रा० ४-७ ।

तत्सिद्धिरित्यनुवर्तते । न कर्मणः=अदृष्टात् तत्सिद्धिः=जगदुत्पत्तिः संभवति । कुतः ? उपादानत्वायोगात्=कर्मणो निमित्तत्वेऽप्युपादानत्वानौचित्यादित्यर्थः ॥ ८१ ॥

ननु कर्मणो निमित्तत्वे मोक्षोऽपि तेनैव सेत्स्यति किं परिणामित्वापरिणामित्वपरार्थत्वापरार्थत्वादिना पुम्प्रकृत्योर्विवेकप्रदर्शनेन ? तत्राह—

**"नानुश्रविकादपि तत्सिद्धिः साध्यत्वेनावृत्तियोगादपुरुषार्थत्वम्" ॥ ८२ ॥**

कर्मण इत्यनुवर्तते । दृष्टात्कर्मणो न तत्सिद्धिरिति किमुवक्तव्यम् । आनुश्रविकादपि=गुरुपाठादनुश्रूयत इत्यनुश्रवः=वेदस्तद्विहितं यागादिकं कर्मानुश्रविकं, तस्मादपि कर्मणो न तत्सिद्धिः=तस्य दुःखात्यन्तनिवृत्तिलक्षणस्य मोक्षस्य सिद्धिः=निष्पत्तिर्न । कुतः ? यतः साध्यत्वेन=मोक्षस्य कर्मसाध्यत्वेनावृत्तियोगात्=[1]**'तद्यथेह कर्मचितो लोकः क्षीयते, एवमेवामुत्र पुण्यचितो लोकःक्षीयते'** [2]**"क्षीणे पुण्ये मर्त्यलोकं विशन्ति"** इति पुनरावृत्तिसंबन्धावश्यंभावादपुरुषार्थत्वं=पुरुषार्थत्वं न संगच्छत इत्यर्थः ।

पूर्वं कर्मणा बन्धो निराकृतः सम्प्रति मोक्ष इत्यपौनरुक्त्यम् ॥ ८२ ॥

नन्वेवं पञ्चाग्निविद्यारूपेणोपासनाख्यकर्मणा मोक्षसुखभोगाय ब्रह्मलोकान् गतानामपुनरावृत्तिश्रुतिः कथमुपपद्येत, तत्राह—

**"तत्र प्राप्तविवेकस्यानावृत्तिश्रुतिः ॥ ८३ ॥**

अनावृत्तिश्रुतिः=[3]**'तेषु ब्रह्मलोकेषु पराः परावतो वसन्ति, तेषां न पुनरावृत्तिः'** इति श्रुतिस्तत्र=तेषु ब्रह्मलोकेषु प्राप्तविवेकस्य=प्राप्तो विवेको येन, तस्य=विषयत्वं षष्ठ्यर्थस्तद्विषयैव मन्तव्या । नान्यविषयेत्यर्थः ॥ ८३ ॥

---

१ छां० पाठ ८ खं० १—६ । २ गी०—अ० ९—श्लोक २१ । ३ बृहदा० अ० ८ ब्रा० २—१५ ।

**ननु** किन्तर्हि कर्मणः फलं, तत्राह–

**"दुःखाद्दुःखं जलाभिषेकवन्नजाड्यविमोकः"** ॥ ८४ ॥

कर्मण इति पूर्वसूत्रादनुषज्यते । दृष्टानुश्रविकाद्द हिंसाबहुलात्कर्मणः पुरुषस्याधिकारिणो दुःखाद्दुःखं=दुःखमनुदुःखं=दुःखधारैवेति यावत् फलं भवति, न जाड्यविमोकः=जाड्यमविवेकस्तस्यात्यन्तनिवृत्तिर्विमोकः फलं नेति शेषः । तत्रोदाहरणं जलाभिषेकवत्=यथा जाड्यार्तस्य पुरुषस्य जलाभिषेकात्कर्मणोदुःखाद्दुःखं फलं भवति न जाड्यविमोक इत्यर्थः॥८४॥

**ननु** काम्यस्य कर्मणो दुःखाद्दुःखं फलमस्तु । निष्कामस्य तु तस्य श्रुतिस्मृतिभ्यां मोक्षफलकत्वसिद्धौ तथा फलं कथं स्यात्, तत्राह–

**"काम्येऽकाम्येऽपि, साध्यत्वाविशेषात्"** ॥ ८५ ॥

काम्ये=यथा काम्ये कर्मणि दुःखाद्दुःखं फलम् । तथाऽकाम्येऽपि= निष्कामकर्मण्यपि बोद्धव्यम् । कुतः ? साध्यत्वाविशेषात=कर्मसाध्यत्वस्यो- भयत्रापितुल्यत्वादित्यर्थः ।

निष्कामकर्मणः फलं हि न साक्षान्मोक्षः । तस्य **'तमेवं विदित्वातिमृत्युमेति**[1] ' इति श्रुत्या ज्ञानमात्रैकफलतानिश्चयात् । किन्तु **'तमेतं ब्राह्मणाविविदिषन्ति यज्ञेन दानेन कर्मणाऽनाशकेन**[2] ' इति श्रुतेरन्तःकरणशुद्धिद्वारा मोक्षहेतुसत्वपुरुषान्यताप्रत्ययः । स च त्रिगुणात्मकप्रकृतिसत्वकार्य्यतया दुःखमेव । न सुखमिति भावः ।

**यस्तु** निष्कामकर्मणि श्रुतिस्मृत्योः साक्षान्मोक्षसाधनत्वमवादः । स च ग्राममार्गं दर्शयितरि ग्रामं दर्शयतीतिवदौपचारिको न मुख्य इति द्रष्टव्यम् ॥ ८५ ॥

**नन्वेवं** भवतां मोक्षोऽपि दुःखमेव स्यात्,साध्यत्वाविशेषात् । तत्राह–

**"निजमुक्तस्य बन्धध्वंसमात्रं परं न समानत्वम्"**॥८६॥

---

१ श्वे०अ०३ मं०८ । २ बृ०अ०६ ब्रा० ४ कं० २२ ।

निजमुक्तस्य=निजेन=आत्मीयेनविवेकप्रत्ययेन मुक्तस्य=मुक्तिभाजः पुरुषस्य यत्परम्=आत्यन्तिकं बन्धध्वंसमात्रम्=अविवेकनाशेनतत्कृतदुःखयोगलक्षण-बन्धस्य निवृत्तिमात्रं तदेव विवेकप्रत्ययस्य फलमिति शेषः । तस्मान्न समानत्वं=तस्यकर्मफलतुल्यत्वं नेत्यर्थः ।

अतीतावस्थालक्षणस्यध्वंसस्याविनाशितया पुनर्बन्धासंभवेनादुःखत्वादिति भावः ॥ ८६ ॥

नन्वस्तु प्रकृतिपुरुषयोर्विवेकप्रत्यय एव साक्षान्मोक्षस्योपायः । तथापि प्रमाणोपदेशाभावे तत्सिद्धिः कथं स्यात् ? तत्राह—

**"द्वयोरेकतरस्यवाऽप्यसन्निकृष्टार्थपरिच्छित्तिः प्रमा, तत्साधकतमं यत् तत्त्रिविधं प्रमाणम्" ॥ ८७ ॥**

द्वयोः=बुद्धिपुरुषयोरुभयोरेकतरस्यवापि=तयोरेकस्य बुद्धिसत्त्वस्यैव वा पुरुषस्यैव वा येयमसन्निकृष्टार्थपरिच्छित्तिः=असन्निकृष्टस्य=प्रमातर्य्यारोहोऽत्र सन्निकर्षः । तद्रहितस्य=पूर्वमनधिगतस्येति यावत् । अर्थस्य=सामान्यविशेषात्मनो घटपटादिभेदभिन्नस्य विषयजातस्य परिच्छित्तिः=स्वनिष्ठतयावधारणं, सा प्रमा=प्रमितिः=यथार्थानुभूतिः=फलमिति यावत् । तत्साधकतमंयत्=तस्याःफलरूपप्रमायाः यदतिशयेन साधकम्=असाधारणकारणमिति यावत् । तत्प्रमाणं=प्रमाणसामान्यम् । तच्चास्माकं सांख्यानां प्रत्यक्षानुमानशब्दभेदात् त्रिविधं=त्रिप्रकारमित्यर्थः ।

तत्र यदि प्रमारूपं फलं बुद्धिनिष्ठमिष्यते।तदा प्रमात्रीबुद्धिः,तदुपहितः पुरुषः साक्षी, घटोऽयंपटोऽयमित्याद्याकारा बुद्धिवृत्तिः प्रमा, चक्षुरादयः प्रमाणम् । यदा तु पुरुषनिष्ठं तदिष्यते, तदा बुद्धौ प्रतिबिम्बितः पुरुषः प्रमाता । शास्त्रे तन्निष्ठस्यैव पुरुषनिष्ठत्वव्यपदेशात् । स एव बिम्बलक्षणः साक्षी । घटमहं जानामि, पटमहं जानामीत्याद्याकारः परैरनुव्यवसायनाम्ना परिभाषितस्तत्तद्विषयोपरक्तबुद्धिवृत्तिविषयो बोधः प्रमा । घटोऽयं पटोऽयमित्या-

दिबुद्धिवृत्तिः प्रमाणं मुख्यम् । चक्षुरादिकं तु गौणम । यदा तूभयनिष्ठं तदा यथायथं तदुभयमिति विवेकः ।

इदमत्र बोध्यम् । यद्यप्यत्राचार्य्यैः प्रमाविकल्पः सूत्रितः । तथापि पौरुषेयबोध एव फलं प्रमेति मुख्यः सिद्धान्तः । पुरुषार्थं करणानां प्रवृत्ते र्वक्ष्यमाणत्वात् । तत्र पौरुषेयबोधोऽपि न पुरुषस्य काचन वृत्तिः, न वा बुद्धिवृत्तिजन्यः कश्चन धर्मः, परिणामित्वप्रसङ्गात् । किन्तु बुद्धौ प्रतिबिम्बितस्तत्तदर्थाकारया बुद्धिवृत्त्या तदाकारतामापद्यमानस्तदुभयावभासकश्चेतनः पुरुष एवेति वाचस्पतिमिश्राः । तत्तद्विषयोपरक्तबुद्धिवृत्तिप्रतिबिंबोपहिता केवला चितिरेवेति भाष्यकृतः । पौरुषेय इत्याधाराधेयभावश्चोभयत्रापि समारोपित एव न मुख्य इति ॥ ८७ ॥

ननु त्रिविधं प्रमाणमिति नोपपद्यते । प्रमाणाधिक्यस्यापि सिद्धत्वात् । तत्राह—

**"तत्सिद्धौ सर्वसिद्धेर्नाधिक्यसिद्धिः" ॥ ८८ ॥**

तत्सिद्धौ=तस्य त्रिविधप्रमाणस्य सर्वार्थसाधकत्वसिद्धौ सर्वसिद्धेः=सर्वेषां प्रतिवादिभिरभ्युपगतानामुपमानादीनामपि तेष्वेवान्तर्भावसिद्धेर्नाधिक्यसिद्धिः=प्रमाणाधिक्यस्य सिद्धिर्न भवतीत्यर्थः ।

अन्तर्भावस्तु सांख्यतत्त्वकौमुद्यां विस्पष्टः ॥ ८८ ॥

ननु प्रत्यक्षप्रमाणस्य किं लक्षणं ? तत्राह—

**"यत्सम्बद्धं सत्तदाकारोल्लेखि विज्ञानं तत्प्रत्यक्षम्"॥८९॥**

सम्बद्धं सत्=इन्द्रियसन्निकर्षद्वारा विषयसम्बद्धं भवत् तदाकारोल्लेखि= विषयाकारधारि यत्=घटोऽयं पटोऽयमित्येवमादियद्विज्ञानं=बुद्धिवृत्यात्मकं ज्ञानं तत्प्रत्यक्षं=प्रत्यक्षप्रमाणमित्यर्थः ॥ ८९ ॥

ननु योगिप्रत्यक्षेऽव्याप्तिः । तत्प्रत्यक्षस्यातीतानागतव्यवहितविप्रकृष्टवस्तुविषयत्वेन विषयेन्द्रियसन्निकर्षद्वारा संबद्धवस्त्वाकारत्वाभावात्. तत्राह—

**" योगिनामबाह्यप्रत्यक्षत्वान्न दोषः " ॥ ९० ॥**

योगिनां=योगजधर्मवतां पुरुषाणामबाह्यप्रत्यक्षत्वात्=न विद्यते बाह्यं=बाह्ये

न्द्रियप्रयोज्यं=विषयेन्द्रियसन्निकर्षप्रयोज्यमिति यावत् प्रत्यक्षं येषां, ते तथा, तेषां भावस्तत्त्वं, तस्मात्=इन्द्रियसन्निकर्षप्रयोज्यबाह्यविषयप्रत्यक्षत्वान्न दोषः=तत्प्रत्यक्षेऽव्याप्तिलक्षणो दोषो नेत्यर्थः ।

इन्द्रियसंनिकर्षप्रयोज्यबाह्यविषयप्रत्यक्षस्यैवात्र लक्ष्यत्वेन योगिप्रत्यक्षस्यालक्ष्यत्वादिति भावः ॥ ९० ॥

अथवा भवतु तदपि लक्ष्यमेवेत्याह—

**" लीनवस्तुलब्धातिशयसंबन्धाद्वाऽदोषः " ॥९१॥**

लीनवस्तुषु=अतीतानागतव्यवहितविप्रकृष्टवस्तुविषयेषु लब्धातिशयसंबन्धाद्वा=योगप्रभावेन लब्धोऽतिशयो येन योगीन्द्रियेण तत्संबन्धस्य सद्भावाद्वाऽदोषः=उक्ताव्याप्तिलक्षणो दोषो नेत्यर्थः ॥ ९१ ॥

नन्वस्मदीश्वरप्रत्यक्षेऽव्याप्तिः । तस्य जन्यत्वेऽपीन्द्रियसन्निकर्षप्रयोज्यत्वाभ्युपगमादिति जैनमाशङ्क्यनिराचष्टे—

**" ईश्वरासिद्धेः " ॥ ९२ ॥**

अदोष इत्यनुवर्तते । यस्येश्वरस्य भवता प्रत्यक्षमुदाह्रियते । तस्यैवासिद्धेरदोषः=उक्ताव्याप्तिलक्षणो दोषो नेत्यर्थः ॥ ९२ ॥

ननु कस्मान्न तत्सिद्धिः ? तत्राह—

**" मुक्तबद्धयोरन्यतराभावान्न तत्सिद्धिः " ॥ ९३ ॥**

साधितोऽपीश्वरः पुरुषविशेष एव वक्तव्यः । स च मुक्तबद्धयोरन्यतरः स्यात् ।तस्य च मुक्तबद्धयोरन्यतरस्येश्वरत्वासंभवान्न तत्सिद्धिरित्यर्थः॥९३॥

ननु कस्मादसंभवः ? तत्राह—

**" उभयथाप्यसत्करत्वम् " ॥ ९४ ॥**

यत इति शेषः । यतो मुक्तो वा स्याद्बद्धो वा स्यादुभयथापि=प्रकारद्वयेनापि तस्यासत्करत्वं=सतः=विद्यमानस्यास्य जगतः करत्वम्=उत्पादकत्वं न संभवतीत्यर्थः । मुक्तस्य प्रयोजनाभावाद् बद्धस्य च सामर्थ्याभावादुत्पादकत्वासम्भवः । तदसम्भवे च तदसम्भव इति भावः ॥ ९४

ननु जगज्जन्मानभ्युपगमादेवमीश्वरोमासैत्सीव, अस्मदागमविहित तत्प्रशंसोपासान्यथानुपपत्या सेत्स्यति, तत्राह—

"मुक्तात्मनः प्रशंसोपासासिद्धस्य वा"॥ ९५ ॥

चार्थोवाकारः । मुक्तात्मनः=भवदागमेषु तु मुक्तिं प्राप्तस्य जीवात्मनः प्रशंसा=निर्दुःखत्वादिसाम्यादीश्वररूपतयास्तुतिः, सिद्धस्यवा=तपःप्रभावात्सिद्धिन्गतस्य जीवविशेषस्य चोपासा=मोक्षमाणानांहितार्थमुपास्तिर्विधीयते, न भगवतो विश्वभर्त्तुरीश्वरस्येत्यर्थः ॥ नहि भवदागमास्तावज्जगतांपति मीश्वरं प्रशंसन्ति, तदुपासनञ्च विदधाति, येन तदन्यथानुपपत्त्याकश्चिदीश्वरः सिध्येत् । अपिच मुक्तात्मनः प्रशंसां सिद्धस्यचोपासां विदधते । तत्रच मुक्तात्मनोऽसङ्गत्वेन ज्ञानासम्भवात्, सिद्धस्य च शरीरित्वेन तज्ज्ञानस्येन्द्रियसान्निकर्षप्रयोज्यत्वावश्यंभावान्नतंप्रत्यक्षेऽव्याप्तिलक्षणः कश्चिद्दोषःसम्भवतीतिभावः ॥ ९५ ॥

ननु तवापि सांख्यस्य नित्यशुद्धबुद्धमुक्तस्वरूपत्वेनेश्वरस्य प्रकृतिपुरुषाधिष्ठातृत्वं नोपपद्यते, तत्राह—

"तत्सन्निधानादधिष्ठातृत्वंमणिवत्" ॥ ९६ ॥

सांख्यानामस्माकन्तु तत्सान्निधानात्=प्रकृतिपुरुषाभ्यां सान्निधानंतत्सान्निधानं,तस्माद्भगवतःपरमेश्वरस्याधिष्ठातृत्वं=प्रकृतिपुरुषनियन्तृत्वं=जगद्रचनार्थेप्रकृतिपुरुषप्रेरकत्वमुपपद्यते, मणिवत्=यथाऽयस्कान्तमणेः शल्यनिष्कर्षणाय सन्निधिमात्रेणलोहप्रेरकत्वमित्यर्थः॥ यद्यपि क्लेशकर्मविपाकाशयैरपरामृष्टत्वान्नित्यशुद्धबुद्धमुक्तस्वरूपः परमात्मा,तथापि स ज्ञानक्रियाशक्तिकोऽप्यभ्युपगम्यते, ज्ञानक्रियाशक्तिश्च तस्य सर्वथा साम्यातिशयविनिर्मुक्ता न जातु ज्ञानान्तरेण क्रियान्तरेण च केनचिदतिशय्यते । अतोऽस्यसन्निधिमात्रेण प्रकृतिपुरुषाधिष्ठातृत्वमपि नानुपपन्नं भवति । सन्निधानश्चात्रेश्वरस्य प्रकृतिपुरुषाभ्यांसाक्षात्सम्बन्धविशेषः, सच न संयोगो नापि समवायोऽपिच स्वस्वामिभावःप्रकृतिपुरुषयोस्तत्रस्वत्वात्, ईश्वरस्य च स्वामित्वात् । सचापि बाह्या

नामिव नागन्तुकः किन्तु सदातन एव मन्यते, अतएव च स सदैवेश्वरः सदैव मुक्त इति वैदिकानामचलोऽसिद्धान्तः । अतस्तस्य नित्यशुद्धबुद्ध-मुक्तस्वरूपत्वेऽपिनिखिलशक्तिसम्पन्नत्वात् प्रकृतिपुरुषाधिष्ठातृत्वे न कश्चिद्दोषइति भावः ॥ ९६ ॥

ननु चेतनत्वाविशेषाज्जीवानामिवेश्वरस्यापि सङ्कल्पादिद्वारैवाधिष्ठातृत्वं किं न स्यात् ? कृतं सान्निधिमात्रेण, तत्राह—

" विशेषकार्य्येष्वपि जीवानाम् " ॥ ९७ ॥

भिन्नक्रमोऽपिः । तत्सन्निधानादधिष्ठातृत्वमित्यनुवर्तत । जीवानामपि= बुद्धिमतिविम्बिताहङ्कारविशिष्टचेतनानामपि विशेषकार्य्येषु=आहारविहारादि लक्षणेषु कार्य्यभेदेषु तत्सन्निधानात्=बुद्धिसान्निधिमात्राद्बुद्ध्यधिष्ठातृत्वं न सङ्कल्पादिनेत्यर्थः ॥ ९७ ॥

ननु सन्निधिमात्रेण चेदीश्वरस्याधिष्ठातृत्वं, न सङ्कल्पादिना, तदा सर्गारम्भे जीवानां वेदवाक्यार्थोपदेशः कथं स्यात् ? तत्राह—

" सिद्धरूपबोद्धृत्वाद्वाक्यार्थोपदेशः " ॥ ९८ ॥

सिद्धरूपबोद्धृत्वात्=सिद्धं=निखिलशक्तिसम्पन्नं रूपं=स्वरूपं यस्य, स सिद्धरूपः=परमात्मा, तस्य बोद्धृत्वात=सन्निधिमात्रेणबोधकत्वात्, बोधोज्ञानं, तत्प्रदातृत्वादितियावद् वाक्यार्थोपदेशः=अग्न्यादिमहर्षिद्वारा वेदवाक्यार्थानुशासनं सम्भवतीत्यर्थः ॥ ९८ ॥

ननु पुरुषमात्रस्य चेत्सान्निधिमात्रेणाधिष्ठातृत्वं गौणं, तदा सङ्कल्पादिद्वारकं मुख्यं कस्य ? तत्राह—

" अन्तः करणस्य तदुज्ज्वलितत्वाल्लोहवद-धिष्ठातृत्वम् " ॥ ९९ ॥

लोहवत्=यथा स्वसन्निहितेनज्वलनशक्तिवह्निना लोहपिण्डस्योज्ज्वलितत्वं भवति, तथाऽन्तःकरणस्य=बुद्धिसत्त्वस्य तदुज्ज्वलितत्वात्=तेन स्वसन्निहिते

चेतनशक्तिपुरुषेणोज्ज्वलितत्वात्=चेतनायमानत्वादाधिष्ठातृत्वं=संकल्पाद्याश्रयत्वसंभवात्तद्द्वारकं मुख्यमाधिष्ठातृत्वं=नियन्तृत्वमित्यर्थः ॥ ९९ ॥

एवं विस्तरेण प्रत्यक्षं लक्षितम् । क्रमप्राप्तमनुमानं लक्षयति ।

**"प्रतिबन्धदृशः प्रतिबद्धज्ञानमनुमानम्" ॥ १०० ॥**

प्रतिबन्धदृशः=प्रतिबन्धो व्याप्तिस्तद्विशिष्टो हेतुरत्र लक्ष्यते । तं पक्षधर्मतया पश्यतीति प्रतिबन्धदृक् । तस्य=व्याप्तिविशिष्टपक्षधर्मताज्ञानवतः सिपाधयिषोर्जीवस्य यत्प्रतिबद्धज्ञानं=प्रतिबद्धस्य=निरूपकत्वेन प्रतिबन्धाश्रयस्य साधनीयधर्मस्य ज्ञानं=पक्षनिष्ठतया जायमानं बुद्धिवृत्त्यात्मकं ज्ञानं, तदनुमानम्=अनुमानप्रमाणमित्यर्थः ।

अत्र फलमनुमितिः पौरुषेयो बोध इति पूर्ववत् ॥ १०० ॥

शाब्दं लक्षयति—

**"आप्तोपदेशः शब्दः" ॥ १०१ ॥**

आप्तोपदेशः=उपदिश्यतेऽनेनेत्युपदेशः=वाक्यम् । अर्थाव्यभिचारित्वमाप्तिस्तया वर्तत इत्याप्तः । आप्तश्चासावुपदेशश्चेत्याप्तोपदेशः=वेदवाक्यम् । तज्जनितं बुद्धिवृत्त्यात्मकं वाक्यार्थज्ञानं शब्दः=शब्दप्रमाणमित्यर्थः ।

अत्रापि फलं पौरुषेयो बोधः शाब्दी प्रमेति पूर्ववद्द्रष्टव्यम् ॥ १०१ ॥

यदर्थोऽयं प्रमाणोपदेशस्तत्स्वयमाह—

**"उभयसिद्धिःप्रमाणात्तदुपदेशः" ॥ १०२ ॥**

यतोऽत इति पूरणीयम् । यत उभयसिद्धिः=उभयोः प्रकृतिपुरुषयोः सिद्धिः=मिथो विवेकेन ज्ञप्तिः प्रमाणात्=उक्तलक्षणात्प्रमाणादेव भवति । अतस्तदुपदेशः=प्रमाणानुशासनमित्यर्थः ॥ १०२ ॥

ननूक्तप्रमाणानां मध्ये कस्मात्प्रमाणात्तदुभयसिद्धिर्भवति ? तत्राह—

**"सामन्यतो दृष्टादुभयसिद्धिः" ॥ १०३ ॥**

पूर्ववच्छेषवत्सामान्यतोदृष्टञ्चेति त्रिविधमनुमानम् । अन्वयमात्रव्याप्तिकं पूर्ववत् । व्यतिरेकमात्रव्याप्तिकं शेषवत् । सामान्यतोदृष्टान्वयव्यतिरेकव्या-

प्तिकं सामान्यतोदृष्टम् । तत्रोभयसिद्धिः=प्रकृतिपुरुषोभयसिद्धिः सामान्यतोदृष्टात्=सामान्यतो दृष्टसंज्ञकादनुमानादित्यर्थः ॥ १०३ ॥

नन्विष्टानिष्टविषयः प्रमाणजनितो बोधः पौरुषेयो न संगच्छते । तस्य बुद्धिवृत्त्यात्मकत्वेन पुरुषनिष्ठत्वाभावात्, तत्राह—

**"चिदवसानो भोगः" ॥ १०४ ॥**

भोगः=इष्टानिष्टविषयानुभवलक्षणो भोगश्चिदवसानः=चिति=पुरुषेऽवसानं=पर्यवसानं यस्य स तथेत्यर्थः ।

यद्यपि विषयानुभवलक्षणो भोगो बुद्धिवृत्त्यात्मकः, तथापि नासौ बुद्धौ पर्य्यवस्यति । तस्या जडत्वेन भोक्तृशक्तिहीनत्वात् । पुरुषस्त्वकर्तापि चेतनत्वान्न भोक्तृशक्तिहीनः । तस्मात्तस्य तत्तद्विषयोपरक्तबुद्धिवृत्तिप्रतिबिम्बिते पुरुषे पर्य्यवसानमिति भावः ॥ १०४ ॥

ननु चिदवसानो भोग इत्ययुक्तम् । लोके कर्तुरेव क्रियाफलोपभोगदर्शनात्, तत्राह—

**"अकर्तुरपि फलोपभोगोऽन्नाद्यवत्" ॥ १०५ ॥**

अकर्तुरपि=कर्माकर्तुरपि पुरुषस्य स्वामिनः फलोपभोगः=बुद्धिकर्तृकक्रियाफलोपभोग उपपद्यते । अन्नाद्यवत्=दिगादित्वाद्यव । यथाऽन्यकृतान्नादेरुपभोगस्तत्स्वामिनो नृपतेरित्यर्थः । अदनीयमाद्यं, तच्च तदन्नञ्च=अन्नाद्यं तद्वदिति माधवाचार्य्यः ॥ १०५ ॥

नन्वेवं 'शास्त्रफलं प्रयोक्तरि'[१] इति शास्त्रं व्याकुप्येत, तत्राह—

**"अविवेकाद्वा तत्सिद्धेः कर्तुः फलावगमः" ॥ १०६ ॥**

स्वाभिमतपक्षान्तरसूचनार्थं वा शब्दः । अविवेकाद्वा=प्रकृतिपुरुषयोर्विवेकग्रहाभावाद्वा तत्सिद्धेः=कर्तृभूताया बुद्धेरुपरागात्पुरुषस्य कर्तृत्वसिद्धेः कर्तुः=कर्तुरेव फलावगमः=क्रियाफलोपभोगो नान्यस्येत्यर्थः ॥ १०६ ॥

---

१ पूर्वमी० अ० ३, पा० ७ सूत्र १८.

**नन्वेवं** भोक्तृत्वं तस्य वास्तवं प्रसक्तं, तथाचानिर्मोक्षप्रसङ्गस्तत्राह–

**"नोभयञ्च तत्त्वाख्याने" ॥ १०७ ॥**

तत्त्वाख्याने=प्रकृतिपुरुषयोः स्वरूपं तत्त्वं, तस्याख्याने=साक्षात्कारे जाते नोभयञ्च=कर्तृत्वभोक्तृत्वोभयमपि नावतिष्ठते इत्यर्थः ।

कर्तृत्वस्येव तत्समकक्षभोक्तृत्वस्याप्यौपाधिकत्वाभ्युपगमादितिभावः १०७॥

**ननु** यत्प्रत्यक्षेण नोपलभ्यते तन्नास्त्येव, कुतः ? सामान्यतो दृष्टात्तदुभयसिद्धिः, तत्राह–

**" विषयोऽविषयोऽप्यतिदूरादेर्हानोपादानाभ्यामिन्द्रियस्य " ॥ १०८ ॥**

चोऽनुवृत्तिः पूर्वसूत्रात् । भिन्नक्रमोऽपिः । हानं=घातः । उपादानं=विमोहकरविषयान्तरोपादानं=मनोऽनवस्थानमिति यावत् । न प्रत्यक्षेणानुपलब्धेरर्थस्याभावः साधयितुं शक्यते । यतोऽतिदूरादेः भावप्रधानो निर्देशः । अतिदूरत्वादेर्दोषात् । आदिपदेन 'अतिसामीप्यसौक्ष्म्यव्यवधानाभिभवसमानाभिहाराणां सङ्ग्रहः' । हानोपादानाभ्याञ्चेन्द्रियस्य=चक्षुरादीन्द्रियस्य घातानवस्थानाभ्याञ्च विषयोऽपि=प्रत्यक्षस्य विषयोऽप्यविषयो भवतीत्यर्थः ॥ १०८ ॥

**ननु** कस्मात्पुनरेतेषु दोषेषु प्रकृतिपुरुषयोः प्रत्यक्षेणानुपलब्धिस्तत्राह–

**"सौक्ष्म्यात्तदनुपलब्धिः " ॥ १०९ ॥**

सौक्ष्म्यात्=निरवयवद्रव्यत्वं सौक्ष्म्यं, तस्मात्तदनुपलब्धिः=तयोः प्रकृतिपुरुषयोरनुपलब्धिः=प्रत्यक्षत्वाभाव इत्यर्थः ॥ १०९ ॥

**नन्वभावादेव** तदनुपलब्धिः किं न स्यात्कृतं तत्र सौक्ष्म्यकल्पनया तत्राह–

**"कार्य्यदर्शनात्तदुपलब्धेः" ॥ ११० ॥**

कार्य्यदर्शनात्=महदादिभूतान्तकार्य्यस्य दर्शनात् । तत्कारणतया तद्धो-

कृतयो च तदुपलब्धेः=तयोः प्रकृतिपुरुषयोरनुमितेर्नाभाव इत्यर्थः॥११०॥

: ननु कार्य्यदर्शनात्कारणमात्रं गम्यते न प्रकृतिरिति शंकते ।

**"वादिविप्रतिपत्तेस्तदसिद्धिरिति चेत् ॥ १११ ॥**

वादिविप्रतिपत्तेः=वादिनां=जगत्कारणतया शून्यब्रह्मपरमाणुवदनशीलानां सौगताद्वैतिचार्वाकाणां विप्रतिपत्तेः=कारणगोचरविरुद्धप्रतिपत्तेस्तदसिद्धिः=तस्याः प्रकृतेर्न सिद्धिरिति चेदित्यर्थः ॥ १११ ॥

अभ्युपेत्य परिहरति ।

**"तथाप्येकतरदृष्टचाऽन्यतरसिद्धेर्नापलापः" ॥ ११२ ॥**

तथापि=प्रकृतौ वादिनां विप्रतिपत्तावप्येकतरदृष्टचा=कार्य्यकारणयोरेकस्य कार्यस्य दृष्ट्या=दर्शनेनान्यतरसिद्धेः=तयोरन्यस्य नित्यकारणस्य सिद्धेः=अनुमितेर्नापलापः=न तदपन्हवः संभवतीत्यर्थः ॥ ११२ ॥

ननु न कारणमपलप्यते । किन्तु प्रकृतिस्तत्राह—

**"त्रिविधविरोधापत्तेश्च" ॥ ११३ ॥**

नापलाप इत्यनुवर्तते । '**अजामेकाम्**[1]' इत्येकः श्रुतिविरोधः । '**प्रकृतेः**[2] **क्रियमाणानि गुणैः कर्माणि सर्वशः**' इति स्मृतिविरोधो द्वितीयः । यादृशं कार्य्यं तादृशं कारणम् । कार्य्यञ्च त्रिगुणात्मकम् । तस्मात्तत्कारणमपि तथेति न्यायविरोधस्तृतीय इत्येतस्य त्रिविधविरोधस्यापत्तेः=प्राप्तेश्च नापलापः=न कारणभूतायाः प्रकृतेरपलापःसंभवतीत्यर्थः ।

त्रिविधो गुणः सत्वरजस्तमांसि, तद्विरोधः=तच्छून्यं जगद्भवेत्, न चैवं दृश्यत इत्यनिरुद्धः ॥ ११३ ॥

ननु तदा हि कार्य्याधारतया नित्या प्रकृतिः सिध्येत, चेदुत्पत्तेः प्राक् कार्य्यं सद्भवेत्।न चोत्पत्तेः प्रागस्ति कार्य्यं सत्। असदुत्पादाभ्युगमात,तत्राह--

**"नासदुत्पादो नृशृङ्गवत्" ॥ ११४ ॥**

---

१ श्वे० अ० ४ मं० ५ । २ गीता अ० ३ श्लो० २७ ।

नासदुत्पादः=कारणव्यापारात्प्रागसतः कार्य्यस्य कारणव्यापारेणोत्पादो न संभवति, नृशृङ्गवत्=यथाऽसतो नृशृङ्गस्य कारणव्यापारेणोत्पादो नेत्यर्थः ॥ ११४ ॥

ननु कस्मान्न संभवति ? तत्राह—

**"उपादाननियमात्" ॥ ११५ ॥**

उपादानस्य=उपादानकारणस्य नियमात्=घटं प्रति मृद इव ज्ञानं प्रति चिद इव प्रतिकार्यं नियमादित्यर्थः ।

चेदसदुत्पद्येत तदा प्रतिकारणं कार्य्यमात्रासत्त्वतौल्यात्तन्नियमो न स्यादिति भावः ॥ ११५ ॥

किञ्च ।

**"सर्वत्र सर्वदा सर्वासंभवात्" ॥ ११६ ॥**

नासदुत्पाद इत्यनुवर्तते । सर्वत्र=सर्वस्मिन् कारणे सर्वदा=सर्वस्मिन् काले सर्वासंभवात्=सर्वस्य कार्य्यस्योत्पादासंभवान्नासदुत्पादः संभवतीत्यर्थः ।

असदुत्पादे चासत्वाविशेषात्सर्वत्र सर्वदा सर्वं संभवेदिति भावः॥ ११६॥

किञ्च ।

**"शक्तस्य शक्यकरणात्" ॥ ११७ ॥**

नासदुत्पाद इत्यनुवर्तते । शक्तस्य=कारणेकार्य्यानागतावस्थाऽत्र शक्तिः। तदाश्रयस्य कारणस्य, शक्यकरणात्=शक्यस्य=तादृक्शक्तिविषयस्य कार्य्यस्य करणात्=उत्पादनान्नासदुत्पाद इत्यर्थः ।

असतः कार्य्यस्य कारणशक्तिविषयत्वायोगादिति भावः ॥ ११७ ॥

किञ्च ।

**"कारणभावाच्च ॥ ११८ ॥**

नासदुत्पाद इत्यनुवर्तते । कार्य्यस्येति शेषः । तत्साधकसर्वहेतुसमुच्चये चः । कारणभावाच्च=भावोऽत्रात्मा । कारणस्य भावो भावो यस्य, तत्तथा। तस्माच्च=कारणात्मकत्वाच्च कार्य्यस्य नासदुत्पाद इत्यर्थः ।

कार्य्यं हि कारणात्मकं दृष्टम् । यथा मृत्कार्य्यं घटादि मृदात्मकम् । तन्तुकार्य्यं वा पटादि तन्त्वात्मकम् । कारणञ्च दण्डादिकारणव्यापारात्माक्सदिति तदात्मकं कार्य्यमपि तदा सदेव, नासत् । सदसतोरैक्यायोगादिति भावः ।

कार्य्यस्य कारणात्मना भेदाभावेऽपि कार्यात्मना कारणाद्भेद इति भेदाभेदाभ्युपगमात्कार्य्यकारणभावोपपत्तिरित्यपि द्रष्टव्यम् ॥ ११८ ॥

शङ्कते ।

**"न भावे भावयोगश्चेत्" ॥ ११९ ॥**

ननु भावे=कारणव्यापारात्प्रागपि विद्यमाने भावात्मके कार्य्ये भावयोगश्चेत्=कारणाव्यापारेणोत्पत्तिसंबन्धश्चेत्तदा कार्य्यस्योत्पादानुत्पादावस्थायां विशेषाभावात्तन्निबन्धनौ तद्विषयौ व्यवहाराव्यवहारौ न=न स्यातामित्यर्थः ॥ ११९ ॥

परिहरति ।

**"नाऽभिव्यक्तिनिबन्धनौ व्यवहाराव्यवहारौ"॥१२०॥**

न=सांख्यानामस्माकं कार्य्यस्योत्पादानुत्पादनिबन्धनौ तद्विषयौ तदुत्पत्तिव्यवहाराव्यवहारौ न, किं त्वभिव्यक्तिनिबन्धनौ=तदभिव्यक्त्यनभिव्यक्तिनिमित्तकौ व्यवहाराव्यहारौ=कारणव्यापारेण कार्य्याभिव्यक्तौ तदुत्पत्तिव्यवहारस्तदनभिव्यक्तौ च तदुत्पत्तिव्यवहाराभाव इत्यर्थः ।

अभिव्यक्तिश्चात्र कार्य्यस्य वर्तमानावस्थैव । तेन कारणव्यापारात्प्राक् तस्यावस्थान्तरेण सत्त्वेऽपि न कश्चिद्दोष इति निश्चेयम् ॥ १२० ॥

नन्वेवं कार्य्यस्यानादिभावमाप्तेर्नाशो न स्यात्, तत्राह—

**"नाशः कारणलयः" ॥ १२१ ॥**

सत्कार्य्यवादिनां नः कार्य्यस्य नाशो न ध्वंसः, किन्तु नाशः कारणलयः=निमित्तयोगादतीतावस्थां प्राप्तस्य तस्य कारणेऽविभागेन संश्लेष इत्यर्थः ॥ १२१ ॥

ननु तथाप्यसदुत्पादभिया कार्य्याभिव्यक्तेरप्यभिव्यक्तिरेव वक्तव्या । तस्याश्च पुनरभिव्यक्तिरन्येत्यनवस्थादोषस्तत्राह—

"पारम्पर्यतोऽन्वेषणा बीजाङ्कुरवत्" ॥ १२२ ॥

अदोष इत्यग्रिमसूत्रादनुकृष्यते । पारम्पर्य्यतः=अनागतावस्थस्य कार्य्यस्य कारणव्यापारेणाभिव्यक्तिः तस्याः पुनरभिव्यक्तिस्तस्याः पुनरिति परम्पराभावतोऽन्वेषणा=अभिव्यक्तेर्गवेषणा । बीजाङ्कुरवत्=बीजादंकुरोऽङ्कुराद्बीजमिति बीजाङ्कुरयोः पारम्पर्यतोऽन्वेषणावन्मन्तव्या । न ततो विलक्षणेत्यदोषः=प्रामाणिकत्वादनवस्थालक्षणो दोषो नेत्यर्थः ॥ १२२ ॥

ननु कार्याभिव्यक्तेः कथञ्चित्प्रामाणिकत्वेऽपि तदभिव्यक्तिपरंपरायास्तथात्वाभावाद् बीजाङ्कुरवदित्यनुपपन्नं, तत्राह—

"उत्पत्तिवद्वाऽदोषः" ॥ १२३ ॥

समाधानान्तरपरो वा । यथा भवतामसत्कार्य्यवादिनां कार्य्योत्पत्तेरुत्पत्तिरनवस्थाभिया कार्य्योत्पत्तिरूपैव । न ततोऽतिरिक्ता । तथाऽस्माकं सत्कार्य्यवादिनां सांख्यानामपि कार्य्याभिव्यक्तेरभिव्यक्तिः कार्य्याभिव्यक्तिरूपैव । न ततो व्यतिरिक्ता । तेनोत्पत्तिवत्=भवदभ्युपगतकार्य्योत्पत्तिवददोषः=अस्मदभ्युपगतकार्य्याभिव्यक्तावप्यनवस्थादोषो नेत्यर्थः ॥ १२३ ॥

ननु भवतूत्पत्तेः प्राक्कार्य्यं सत् । सिध्यतु च तदाधारतया नित्या प्रकृतिः । तथापि कार्य्यमेतत्कारणञ्चैतदिति विवेकज्ञानं कथं स्यादुभयोरैक्यादित्याशंक्य तदुपयुक्तं साधर्म्यवैधर्म्यप्रकरणमारभमाणः पूर्वन्तावन्महदादिभूतान्तव्यक्तस्य कार्यस्य साधर्म्यमाह—

"हेतुमदनित्यमव्यापि सक्रियमनेकमाश्रितं लिङ्गम्" ॥ १२४ ॥

यल्लिङ्गं=लीनमर्थं गमयति, लयं वा गच्छतीति लिंगं=महदादिभूतान्तं कार्य्यजातं व्यक्तम् । तद् हेतुमत्=हेतुः कारणं, स विद्यते यस्य, तत्तथा=कारणवत् । अनित्यम्=अध्रुवं=नाशशीलमिति यावत् । अव्यापि=सर्वं परि-

णामिनं व्याप्तुं शीलं यस्य न । तत् । सक्रियं=परिस्पन्दः क्रिया तत्सहितम् । अनेकं=नाना । आश्रितं=साधारमित्यर्थः ।

यल्लिङ्गं तद्धेतुमत्त्वादिधर्मकमिति भावः ॥ १२४ ॥

**ननु** हेतुमत्त्वादिकं साधर्म्यं महदादिकार्य्यस्य निरूप्यमाणं न सङ्गच्छते। हेतुभूतायाः प्रकृतेस्ततोऽतिरेकेणासिद्धेस्तत्राह—

**" आञ्जस्यादभेदतो वा गुणसामान्यादेस्तत्सिद्धिः प्रधानव्यपदेशाद्वा " ॥ १२५ ॥**

प्रमाणभेदप्रदर्शनार्थं वा द्वयम् । लिङ्गस्यान्वयव्यतिरेकशालित्वमाञ्जस्यम् । सुखदुःखमोहलक्षणः साधारणो गुणो गुणसामान्यम् । आदिना परिणामशीलत्वसंग्रहः । तदभेदः कार्य्यमात्रेऽन्वयः । तथाच—'विमतं कार्य्यं सुखदुःखमोहात्मकप्रकृतिपूर्वकम् । तदन्वितत्वात् । यद्येनान्वीयते, तत् तत्प्रकृतिपूर्वकम् । यथा मृदन्वितं घटादि मृत्प्रकृतिपूर्वकं, तथाचेदम् । तस्मात्तथा' इत्येवमाञ्जस्यात्=अन्वयव्यतिरेकशालिनोगुणसामान्यादेरभेदतो वा=सुखदुःखमोहादिसाधारणगुणान्वयलक्षणलिङ्गतो वा, प्रधानव्यपदेशाद्वा= प्रधीयते=लीयते कार्य्यजातमस्मिन्निति प्रधानशब्देन शास्त्रे व्यवहाराद्वा तत्सिद्धिः=कार्य्यातिरेकेण प्रकृतिसिद्धिरित्यर्थः ॥ १२५ ॥

**कार्य्यमात्रस्य व्यक्तस्य** साधर्म्यमुक्त्वा कार्य्यकारणयोर्व्यक्ताव्यक्तयोरुभयोः साधर्म्यमाह—

**" त्रिगुणाचेतनत्वादिद्वयोः " ॥ १२६ ॥**

आदिशब्देनाविवेकित्वविषयत्वसमानत्वप्रसवधर्मित्वानां सङ्ग्रहः । त्रिगुणत्वं=त्रीणि सत्वरजस्तमांसि गुणाः कारणतया स्वरूपतया च संति ययोस्ते तथा, तयोर्भावस्तत्त्वं=गुणत्रयवत्त्वम् । अचेतनत्वं=चेतनाभिन्नत्वम् । अविवेकित्वं=संभूयकारित्वम् । विषयत्वं=ग्राह्यत्वम् । समानत्वं=सर्वपुरुषसाधारणत्वम् । प्रसवधर्मित्वं=सरूपविरूपपरिणामशालित्वम् । द्वयोः= कार्य्यकारणयोर्व्यक्ताव्यक्तयोःसाधर्म्यमित्यर्थः ॥ १२६ ॥

नन्तु गुणानामपि मिथः साधर्म्यं वैधर्म्यञ्च वक्तव्यम् । अन्यथा तेषा त्रित्वानुपपत्तेरित्याशंक्य पूर्वं वैधर्म्यमाह—

**"प्रीत्यप्रीतिविषादाद्यैर्गुणानामन्योऽन्यं वैधर्म्यम्" ॥ १२७ ॥**

प्रीतिः=सुखम् । अप्रीतिः=दुःखम् । विषादः=मोहस्तदाद्यैः=तदादिभिरसाधारणैर्धर्मैर्गुणानां=सत्त्वरजस्तमसामन्योऽन्यं=परस्परं वैधर्म्यं=विरुद्धधर्मत्वमित्यर्थः ।

तत्र प्रसादलाघवाभिष्वङ्गप्रीति तितिक्षा सन्तोषार्जवमार्दवह्रीश्रद्धाक्षमानुकम्पा ज्ञानादिरूपनानाभेदं सत्त्वम् । दुःखशोकद्वेषद्रोहमत्सरनिन्दा पराभवादिरूपनानाभेदं रजः । मोहभयविप्रलम्भ नास्तिक्यकौटिल्यकार्पण्याज्ञानादिरूपनानाभेदं तम इति विवेकः ॥ १२७ ॥

वैधर्म्यं प्रदर्श्य साधर्म्यवैधर्म्ये द्वे प्रदर्शयति ।

**"लघ्वादिधर्मैःसाधर्म्यं वैधर्म्यञ्च गुणानाम्" ॥ १२८ ॥**

गुणानां=सत्त्वरजस्तमसां लघ्वादिधर्मैः=भावप्रधानो निर्देशः । लघुत्वचलत्वगुरुत्वपुरुषार्थत्वान्योऽन्याभिभववृत्तित्वादिभिर्धर्मैः साधर्म्यं वैधर्म्यञ्च=पुरुषार्थत्वादिभिः साधर्म्यं, लघुत्वादिभिश्च वैधर्म्यमित्यर्थः ॥ १२८ ॥

नन्तु महदादेर्निरूप्यमाणं हेतुमत्त्वादिकं साधर्म्यं न संभवति । तस्य कार्य्यत्वासिद्धेस्तत्राह—

**"उभयान्यत्वात्कार्यत्वं महदादेर्घटादिवत्" ॥१२९॥**

महदादेरुभयान्यत्वात्=प्रकृतिपुरुषोभयभिन्नत्वात्कार्य्यत्वं=जन्यत्वमनुमेयम् । तत्रोदाहरणं घटादिवत्=यथा घटादेः प्रकृतिपुरुषान्यत्वात्कार्य्यत्वमित्यर्थः ।

तदुभयान्यत्वञ्च भोग्यत्वाद्विनाशित्वादिति बोध्यम् ॥ १२९ ॥

हेत्वन्तरमाह—

**"परिमाणात्" ॥ १३० ॥**

कार्य्यत्वं महदादेर्घटादिवदित्यनुवर्तते । परिमाणात्=परिमितत्त्वात्=परिच्छिन्नत्वान्महदादेर्घटादिवत्कार्य्यत्वमित्यर्थः ॥ १२० ॥

तृतीयं हेतुमाह–

**" समन्वयात् " ॥ १२१ ॥**

कारणगुणानां कार्य्ये समानरूपतयाऽन्वयः समन्वयः । तस्माल्लिङ्गान्महदादेः कार्य्यत्वमित्यर्थः ॥ १२१ ॥

चतुर्थं हेतुमाह–

**" शक्तितश्चेति " ॥ १२२ ॥**

इतिशब्दः कार्य्यत्वसाधकहेतूनां समाप्तिमाह । शक्तितश्च=सातिशयशक्तिमत्वाच्च महदादेः कार्य्यत्वं घटादिवदित्यर्थः ।

शक्तितश्च=करणतश्चेत्यर्थः । पुरुषस्य यत्करणं, तत्कार्य्यं चक्षुरादिवदिति भावः । इतिभाष्यम ॥ १२२ ॥

ननु मास्तु तस्य कार्य्यत्वं को दोषस्तत्राह–

**" तद्धाने प्रकृतिः पुरुषो वा " ॥ १२३ ॥**

तद्धाने=कार्य्यत्वाभावे प्रकृतिः पुरुषो वा=महदादिकं प्रकृतिर्वा स्यात्पुरुषो वा स्यादित्यर्थः ।

तयोरेवाकार्य्यत्वात् । तच्च नेष्टं भोग्यत्वाद्विनाशित्वादिति भावः ॥ १२३ ॥

नन्वकार्य्यं सदपि तदुभयभिन्नमेव किञ्चित्सेत्स्यति । तत्राह–

**" तयोरन्यत्वे तुच्छत्वम् " ॥ १२४ ॥**

तयोः=पञ्चम्यर्थे षष्ठी । प्रकृतिपुरुषाभ्यामन्यत्वे=भिन्नत्वे तुच्छत्वं=शशशृङ्गादिवत् तुच्छत्वमेव स्यादित्यर्थः ।

तद्भिन्नाकार्य्यस्य तुच्छत्वदर्शनादिति भावः ॥ १२४ ॥

तदेवं महदादेः कार्य्यत्वं प्रसाध्य तेन कारणानुमानेऽनुक्तं विशेषमाह–

**" कार्य्यात्कारणानुमानं तत्साहित्यात् " ॥ १२५ ॥**

कार्य्यात्=महत्तत्त्वादेः कारणानुमानं=प्रकृतेरनुमानं तत्साहित्यात्=

कार्य्यसाहित्यं कारणे वैशिष्ट्यं तस्माद्भवति । नतु ताटस्थ्यादित्यर्थः । कार्य्यकारणयोरभेदाभ्युपगमादिति भावः ॥ १२५ ॥

यादृशं कारणं तदाह—

" अव्यक्तं त्रिगुणाल्लिङ्गात् " ॥ १२६ ॥

त्रिगुणात्=त्रिगुणात्मकात् लिङ्गात्=महदादेर्व्यक्तात्कारणं प्रकृतिरव्यक्तं=सूक्ष्मतरमित्यर्थः ॥ १२६ ॥

नन्वव्यक्तं चेत्तर्हि नास्त्येव । तत्राह—

" तत्कार्य्यतस्तत्सिद्धेर्नापलापः " ॥ १२७ ॥

तत्कार्य्यतः=तस्य कारणस्य प्रकृतेर्यत्कार्य्यं महत्तत्वादिकम् । तस्मात्तत्सिद्धेः=तस्य कारणस्य प्रकृतेरनुमितेर्नापलापः=न तदपह्नवः संभवतीत्यर्थः ॥ १२७ ॥

नन्वेवं जगतः कारणं प्रकृतिः साध्यताम् । तत्कार्य्योपलब्धेः । पुरुषसाधनन्तु कथं स्यात्? तत्राह—

"सामान्येन विवादाभावाद्धर्मवन्न साधनम् " ॥१२८॥

विशेषतः पुरुषे विवादेऽपि सामान्येन=सामान्यतो विवादाभावान्न साधनं=तस्य प्रकृतिवत्साधनं नापेक्षितं । धर्मवत्=यथा धर्मे विशेषतो विवादेऽपि सामान्यतो विवादाभावात्तत्साधनानपेक्षेत्यर्थः ॥ १२८ ॥

ननु सामान्यतः सिद्धेऽपि पुरुषे शरीरादिप्रकृत्यन्तेषु तत्त्वेषु कोऽसा पुरुषः किंस्वरूपश्चेति जिज्ञासा न निवर्तते विशेषतो निरूपणाभावादित्याशंक्य तस्य विशेषतो निरूपणार्थं पूर्वन्तावच्छरीरादिव्यतिरिक्तत्वं प्रतिजानीते ।

" शरीरादिव्यतिरिक्तः पुमान्" ॥ १२९ ॥

आदिशब्दः प्रकृत्यन्ततत्वमात्रपरः । शरीरादिव्यतिरिक्तः=शरीरादिभ्यो भिन्नः पुमान्=पुरुष इत्यर्थः ॥ १२९ ॥

प्रतिज्ञायां हेतुमाह—

" संहतपरार्थत्वात् " ॥ १४० ॥

'**संहतपरार्थत्वात्पुरुषस्य**'[1] इति पूर्वमुक्तोऽपि हेतुः प्रसंगादिह पुनरुक्त इत्यदोषः । हेतुवर्गसंकलनार्थं पुनरुक्तिरिति भाष्यम् । शरीरादि प्रकृत्यन्तं संहतम् । तत्साध्यौ भोगापवर्गौ परार्थौ । तच्छालित्वादित्यर्थः ॥ १४० ॥

**द्वितीय**हेतुमाह—

**" त्रिगुणादिविपर्य्ययात् " ॥ १४१ ॥**

आदिपदमचेतनत्वादिसंग्रहार्थम् । प्रकृतितत्कार्यं त्रिगुणमचेतमविवेकि । तद्वैपरीत्यादित्यर्थः ॥ १४१ ॥

**तृतीय**हेतुमाह—

**" अधिष्ठानाच्चेति " ॥ १४२ ॥**

पुरुषातिरिक्तत्वसाधकहेतुपरिसमाप्तिपरमितिपदम् । अधिष्ठातृत्वाच्चेत्यर्थः । **यथा** रथस्याधिष्ठाता पुरुषस्तद्व्यतिरिक्तः । तथा शरीराद्यधिष्ठाता पुरुषोऽपि तदधिष्ठेयेभ्यः शरीरादिप्रकृत्यन्तेभ्यस्तत्त्वेभ्यो व्यतिरिक्तो मनसि धर्त्तव्यः । जडस्याधिष्ठातृत्वायोगादिति भावः ।

**इदमत्र बोध्यम्** । यद्यपीश्वरः प्रकृतेरधिष्ठाता । न जीवः । तथापि तस्य तदधिष्ठातृत्वोक्तिर्भाक्तत्वाददृष्टाभिप्रायेण वा । बुद्धिसत्त्वाधिष्ठातृत्वात्कार्य्यकारणयोरभेदाभिप्रायेण वा द्रष्टव्या । तेन न कश्चिद्दोष इति ॥ १४२ ॥

**ननु** हेतुरस्तु । मास्तु साध्यमित्याशंक्य द्वाभ्यामनुकूलं तर्कमाह—

**" भोक्तृभावात् " ॥ १४३ ॥**

शरीरादिव्यतिरिक्तःपुमानित्यनुवर्तते । पुमान् शरीरादिव्यतिरिक्तो भोक्तृत्वादित्यर्थः ।

चेच्छरीरादिव्यतिरिक्तो न भवेत् । किन्तु । तदन्यतम एव स्यात्, तदा भोक्तापि न स्यात् । अत एव चेतनोऽपि न स्यात् । शरीरादेर्जडत्वेन भोक्तृत्वासंभवादिति भावः ।

---

१ सांख्य अ० १ सूत्र ६६ ।

एतेन साध्याभावे प्रथमद्वितीयहेतू अपि न स्यातामित्यनिष्टमापादितं वेदितव्यम् ॥ १४३ ॥

द्वितीयं तर्कमाह—

**" कैवल्यार्थं प्रवृत्तेश्च " ॥ १४४ ॥**

अधिष्ठानाभावः कैवल्यं=मोक्ष इति यावत् । तदर्थं प्रवर्तनाच्चेत्यर्थः । चेत्पुमान् शरीरादिव्यतिरिक्तो न भवेत् । किन्तु तदन्यतम एव स्यात् । तदा कैवल्यार्थं न प्रवर्तेत । चेतनस्यैवाधिष्ठानं कुर्वतः परिश्रान्तचित्तस्य केवलीभावाय प्रवृत्तिदर्शनात् । शरीरादेश्च तदयोगेन कैवल्यासंभवादिति भावः ।

एतेन साध्याभावे तृतीयहेतुरपि न स्यादित्यनिष्टमापादितं द्रष्टव्यम् ॥ १४४ ॥

ननु तथापि किंस्वरूपः पुरुषस्तत्राह—

**" जडप्रकाशायोगात्प्रकाशः " ॥ १४५ ॥**

शरीरादिव्यतिरिक्तः पुमानिति सम्बध्यते । स च प्रकाशः=अप्राकृतप्रकाशात्मकः=ज्ञानस्वरूप इति यावत् । कुतः ? जडप्रकाशायोगात्=प्राकृतः प्रकाशो जडप्रकाशः । तस्यात्मत्वायोगादित्यर्थः ।

एतेन बुद्धिसत्त्वमात्मेति मतं निराकृतं वेदितव्यम् ॥ १४५ ॥

ननु प्रकाशस्वरूपत्वेऽपि तेजोवद्धर्मधर्मिभावः किन्न स्यात्, तत्राह—

**" निर्गुणत्वान्न चिद्धर्मा " ॥ १४६ ॥**

निर्गुणत्वात्=गुणानाश्रयत्वान्न चिद्धर्मा=न ज्ञानधर्मा पुमानित्यर्थः १४६॥

नन्वहमुपलभे जानाम्यहमिति धर्मधर्मिभावस्य प्रत्यक्षत्वाच्चिद्धर्मो पुमान् किन्न भवेत्, तत्राह—

**"श्रुत्या सिद्धस्य नापलापस्तत्प्रत्यक्षबाधात्"॥१४७॥**

श्रुत्या='असङ्गोह्ययं पुरुषः'[1] इत्यादि श्रुत्या सिद्धस्य=सिद्धिं

---

१ बृ० अ० ६ ब्रा० ३ श्रु० १५ ।

गतस्य निर्गुणत्वस्य नापलापः=नापह्नवः संभवति । तत्प्रत्यक्षबाधात्= तत्प्रत्यक्षस्य गौरोहमिति प्रत्यक्षवच्छ्रुत्यैव बाधनादित्यर्थः ॥ १४७ ॥

ननु युक्तिप्रधानमेतच्छास्त्रं न श्रुतिप्रधानम् । तेन पुरुषस्य प्रकाशरूपत्वाभावे को दोषः तत्राह—

**" सुषुप्त्याद्यसाक्षित्वम् " ॥ १४८ ॥**

आदिपदार्थः स्वप्नः । प्रकाशरूपत्वाभावे पुरुषस्य सुषुप्त्यादिसाक्षित्वं नस्यादित्यर्थः ॥ १४८ ॥

तदेवं पुरुषस्य प्रकाशरूपत्वमुपपाद्य बहुत्वमुपपादयति ।

**" जन्मादिव्यवस्थातः पुरुषबहुत्वम् " ॥ १४९ ॥**

जन्मादिव्यवस्थातः=कश्चिज्जातः कश्चिन्मृतः कश्चिद्बद्धः कश्चिन्मुक्त इत्यादिव्यवस्थाऽन्यथानुपपत्तितः पुरुषबहुत्वं=नानापुरुष इत्यर्थः ॥ १४९ ॥

ननु पुरुषैक्येऽप्युपाधिभेदाज्जन्मादिव्यवस्था संभवति । तत्राह—

**" उपाधिभेदेऽप्येकस्य नानायोग आकाशस्येव घटादिभिः " ॥ १५० ॥**

आकाशस्येव घटादिभिः=यथैकस्यैवाकाशस्य नानोपाधिभूतैर्घटादिभिर्योगस्तथैकस्यैव पुरुषस्य नानायोगः=नानाभूतैरुपाधिभिः संबन्धो वक्तव्यः । तथा चोपाधिभेदेऽपि=तत्तदुपाधिनानात्वेऽप्युपधेयभेदाभावान्न जन्मादिव्यवस्था संभव इत्यर्थः ॥ १५० ॥

ननु स्वतश्चैतन्यस्यैक्येऽपि तत्तदुपाधिविशिष्टस्य तस्य भेदाद्व्यवस्था सेत्स्यति तत्राह—

**" उपाधिर्भिद्यते न तु तद्वान् " ॥ १५१ ॥**

तत्राप्युपाधिर्भिद्यते=उपाधिरेव नाना । नतु तद्वान्=नैवोपाधिमान् विशिष्ट इत्यर्थः ।

विशिष्टस्य वस्तुतो भेदाभ्युपगमे तु नानात्मवाद एवाभ्युपगतः स्यादिति भावः ॥ १५१ ॥

किञ्च ।

**" एवमेकत्वेन परिवर्तमानस्य न विरुद्ध-धर्माध्यासः " ॥ १५२ ॥**

अपिरनुवर्तते । एवं=यथा जन्मादिव्यवस्थाऽनुपपत्तिरेवमेकत्वेन=सर्वोपाधिष्वेकरूपत्वेन परिवर्तमानस्य=सर्वतो विद्यमानस्य पुरुषस्य युगपद्विरुद्धधर्माध्यासोऽपि=विरुद्धानां सुखदुःखादिधर्माणां सुख्यहं दुःख्यहमित्यादिरूपसम्बन्धोऽपि न=नोपपद्यत इत्यर्थः ॥ १५२ ॥

ननु सुखदुःखादयोऽपि तत्तदुपाधिधर्मा एवाभ्युपगम्यन्ते । तेन तेषां पुरुषे समारोपादेककालावच्छेदेनापि व्यवस्था सेत्स्यति, तत्राह—

**"अन्यधर्मत्वेऽपि नारोपात् तत्सिद्धिरेकत्वात्"॥१५३॥**

अन्यधर्मत्वेऽपि=सुखदुःखादीनां तत्तदुपाधिधर्मत्वेऽप्यारोपात्=पुरुषे समारोपात्तत्सिद्धिः=सुखदुःखादिव्यवस्थासिद्धिर्न=न संभवति । कुतः ? एकत्वात्=आरोपाधिष्ठानस्य पुरुषस्यैकत्वादित्यर्थः ॥ १५३ ॥

नन्वेवं तर्हि पुरुषनानात्वेऽद्वैतश्रुतिविरोधस्तत्राह—

**" नाद्वैतश्रुतिविरोधो जातिपरत्वात् " ॥ १५४ ॥**

नाद्वैतश्रुतिविरोधः=नानात्मवादिनामस्माकमात्मैक्यप्रतिपादिकाभिः श्रुतिभिर्विरोधो न । कुतः ? जातिपरत्वात्=तासां चित्त्वेन पुरुषैकरूपत्वप्रतिपादनपरत्वादित्यर्थः ॥ १५४ ॥

ननु यथा पुरुषैकत्वं तन्नानात्वप्रत्यक्षेण विरोधात्परित्यज्यते,तथा पुरुषैकरूपत्वमपि तन्नानारूपत्वप्रत्यक्षेण विरोधात् परित्यक्तव्यम्, तत्राह—

**" विदितबन्धकारणस्य दृष्ट्याऽतद्रूपम् " ॥ १५५ ॥**

विदितबन्धकारणस्य=विदितं=लब्धवृत्तिकं बन्धकारणं=अविवेकलक्षणं मिथ्याज्ञानं यस्य, तस्याज्ञपुरुषस्य दृष्ट्याऽतद्रूपं=श्रुतिप्रतिपादितं चित्त्वेन पुरुषैक्यरूपं नेत्यर्थः ।

ज्ञातबन्धकारणस्य दृष्ट्या तद्रूपं=श्रुतिप्रतिपादितं रूपमित्यनिरुद्धः ॥ १५५ ॥

**ननु** पुरुषैकरूपत्वं चेत् स्यादुपलभ्येत । नोपलभ्यते । तस्मान्नास्त्येव, तत्राह—

**" नान्धदृष्ट्या चक्षुष्मतामनुपलंभः " ॥ १५६ ॥**

अन्धदृष्ट्या=अन्धानां=विवेकचक्षुःशून्यानां दृष्ट्याऽनुपलंभेऽपि न चक्षुष्मतां=विवेकचक्षुषामार्य्याणां दृष्ट्याऽनुपलंभः=पुरुषैकरूपत्वानुपलम्भ इत्यर्थः। **तथा** च नाद्वैतश्रुतिविरोध इति भावः ॥ १५६ ॥

**किञ्च ।**

**" वामदेवादिर्मुक्तो नाद्वैतम् " ॥ १५७ ॥**

आदिना भरतादेः संग्रहः । वामदेवादिर्मुक्तो जातः । तदतिरिक्ता बद्धजीवाश्चाद्याप्युपलभ्यन्ते । तस्मान्नाद्वैतं=नात्मैकत्वमित्यर्थः ।

**चेदेक** एवात्मा भवेत्, तदा वामदेवादिमुक्तौ सर्वमुक्तेरिदानीं बद्धजीवो न कश्चिदुपलभ्येत । विद्यते तावदुपलम्भस्तस्मान्नाद्वैतमिति भावः॥१५७॥

**ननु** वामदेवादेरपि न मुक्तिर्जाता, तत्राह—

**"अनादावद्य यावदभावाद्भविष्यदप्येवम्" ॥ १५८ ॥**

अनादौ=अनादिकालकेसंसारेऽद्ययावत्=अद्यपर्य्यन्तमभावात्=मुक्तेरजायमानत्वाद् भविष्यदपि=भविष्यत्कालके संसारेऽप्येवं=न कस्य चिन्मुक्तिर्भविष्यतीत्यर्थः ॥ १५८ ॥

**ननु** नानात्मवादेऽपि मुक्तेरवश्यंभावात् क्रमेण सर्वमुक्तौ संसारस्यात्यन्तोच्छेदः प्रसज्यते, तत्राह—

**" इदानीमिव सर्वत्र नात्यन्तोच्छेदः " ॥ १५९ ॥**

इदानीमिव=यथेदानीमीश्वरनियमात् केचिन्मुक्ताः केचिद्बद्धा वर्तन्ते,

तथा सर्वत्र=भूतभविष्यतोरपि कालयोरवर्तन्त । वर्त्स्यन्ते च । तस्मान्नात्यन्तोच्छेदः=संसारस्यात्यन्तोच्छेदो न कदापि शंकनीय इत्यर्थः ॥ १५९ ॥

ननु प्रकृतिपुरुषव्यतिरिक्तः कोऽयमीश्वरः । यस्य नियमवशात्संसारचक्रं सततमनुवर्तते, तत्राह—

**" व्यावृत्तोभयरूपः" ॥ १६० ॥**

व्यावृत्तं=भिन्नं=विलक्षणमितियावदुभयस्मात्=प्रकृतेः पुरुषाच्च रूपं=स्वरूपं यस्य, स तथा=नित्यं क्लेशकर्मविपाकाशयैरपरामृष्टःपुरुषविशेष इत्यर्थः ॥ १६० ॥

ननु प्रकृतिविलक्षणत्वेऽपि पुरुषविलक्षणत्वमस्य कथमनुजानीमः ? तत्राह—

**" साक्षात्संबन्धात्साक्षित्वम् " ॥ १६१ ॥**

यत इति शेषः । यस्मात् साक्षात्संबन्धात्=प्रकृतेः पुरुषाणाञ्चेश्वराधीयतया तादात्म्यलक्षणः संबन्धः साक्षात्सम्बन्धः । स्वस्वामिभावलक्षणः शरीरशरीरिभावलक्षणः संबन्धोऽप्ययमेव परिभाष्यते । तस्मादस्य भगवतो जगदधिपतेः साक्षित्वं=विश्वसाक्षित्वं=साक्षात्सर्वद्रष्टृत्वमित्यर्थः ।

तथा चाह भगवान् मन्त्रः । ऋ०अष्ट० २ अ०३ वर्ग १७मं २० ।

**द्वा, सुपर्णा, सयुजा, सखाया, समानं वृक्षं परि-**
**षस्वजाते । तयो रन्यः पिप्पलं स्वाद्वत्त्यन-**
**श्नन्नन्यो अभिचाकशीति ॥ इति ॥**

पुरुषस्तावदात्मोपाधिभूतबुद्धिसत्त्वस्य तद्धर्माणाञ्च केषाञ्चित्साक्षी भवन्नपि न विश्वस्य साक्षी । तेन तद्विलक्षणः श्रीपतिरीश्वर इति भावः ॥ १६१ ॥

अन्यं विशेषमाह—

**" नित्यमुक्तत्वम् " ॥ १६२ ॥**

यत इति शेषः । यस्मादस्य भगवतो नित्यमुक्तत्वं=नित्यं मुक्तिभाक्त्वमित्यर्थः ।

पुरुषस्य बन्धकोटिरुपावर्तते, भगवतो जगदीश्वरस्य तु न साऽभून्न भवति न भविष्यतीति महद्वैलक्षण्यमिति भावः ॥ १६२ ॥

ननु कस्मादस्य नित्यमुक्तत्वमभ्युपेयते ? तत्राह—

"औदासीन्यश्चेति" ॥ १६३ ॥

इति हेत्वर्थे । पर्याप्तकामत्वादिधर्मान्तरसमुच्चयार्थश्चः । यस्मादस्य जगदधिपतेरौदासीन्यं=नित्यं माध्यस्थ्यं=पक्षपातराहित्यमित्यर्थः ॥१६३॥

नन्वीदृशश्चेदीश्वरस्तर्हि श्रूयमाणं जगत्कर्तृत्वं तस्य कथमुपपद्येत, कथञ्च तदा कर्त्री प्रकृतिरिति सांख्यडिण्डिमोऽपि रुद्ध्च्छेत ? तत्राह—

"उपरागात्कर्तृत्वं चित्सान्निध्यात्, चित्सान्निध्यात्" ॥ १६४ ॥

अध्यायपरिसमाप्तिसूचनार्था वीप्सा । यथायोग्यमन्वयः । उपरागात्= प्रकृतिसन्निधानादस्य कर्तृत्वं=प्रयोजककर्तृत्वम् । प्रकृतेश्च चित्सान्निध्यात्= ईश्वरश्चित् । तत्सन्निधानान्मुख्यं कर्त्रीत्वमित्यर्थः ।

तत्र प्रयोजककर्तृत्वं निमित्तत्वम् । मुख्यकर्तृत्वमुपादानत्वमिति विवेकः १६४

अथात्यन्तपुरुषार्थो बन्धोऽनुप्रकृतिस्तथा ॥
सविस्तरं पुमानीशः प्रथमेऽस्मिन्निरूपितः ॥ १ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्य्योदासीनवर्य्यात्मारामभगवत्पादशिष्यहरिप्रसादकृतायां सांख्यसूत्रवृत्तौ प्रथमो विषयाध्यायः ॥ १ ॥

## अथ द्वितीयोऽध्यायः ।

नतु प्रकृतेः प्रयोजनाभावान्मुख्यं जगतः कर्त्रीत्वं न संभवति, तत्राह—

**" विमुक्तमोक्षार्थं स्वार्थं वा प्रधानस्य ॥ १ ॥**

कर्तृत्वमिति प्रथमाऽध्यायशेषसूत्रादनुवर्तते । विमुक्तमोक्षार्थं=विवेकेन मुक्तो विमुक्तः=पुरुषः, तस्य मोक्षार्थं=मुक्त्यै स्वार्थं वा=भोगापवर्गप्रदातृत्वलक्षणस्वाधिकारसमाप्त्यै वा प्रधानस्य=प्रकृतेः कर्तृत्वं=जगत्स्रष्ट्रीत्वमित्यर्थः ।

यद्यपि मोक्षवद्भोगोऽपि सृष्टेः प्रयोजनं, तथापि प्रधानत्वान्मोक्ष एव सूत्रित इति ध्येयम् ॥ १ ॥

नतु विमुक्तमोक्षार्थश्चेत्प्रकृतेः स्रष्ट्रीत्वं, तर्हि सकृत्सृष्टयैव मोक्षसंभवे कृतमसकृत्सृष्टया, तत्राह—

**"विरक्तस्य तत्सिद्धेः" ॥ २ ॥**

विरक्तस्य=विवेकप्रत्ययोत्पन्नपरवैराग्यस्य तत्सिद्धेः=मोक्षोत्पत्तेर्न सकृत्सृष्टया निर्वाह इत्यर्थः ॥ २ ॥

नतु सकृत्सृष्टयैव श्रवणमात्राद्वैराग्यं सेत्स्यति, तत्राह—

**" न श्रवणमात्रात् तत्सिद्धिरनादिवासनाया बलवत्त्वात् " ॥ ३ ॥**

अनादिवासनायाः=वैराग्यप्रतिबन्धकीभूताया अनादिसंसारवासनाया बलवत्त्वात्=प्रबलत्वान्न श्रवणमात्रात्=बहुजन्मकृतपुण्यसञ्चयलभ्यात्सत्त्वपुरुषान्यताश्रवणमात्रात्तत्सिद्धिः=तस्य वैराग्यस्य सिद्धिरित्यर्थः ॥ ३ ॥

असकृत्सृष्टौ युक्त्यन्तरमाह—

**" बहुभृत्यवद्वा प्रत्येकम् " ॥ ४ ॥**

वा=अथवा प्रत्येकं बहुभृत्यवत्=यथैकैकं सद्गृहस्थं प्रति स्त्रीपुत्रादिभेदेन बहवो भृत्याः=भर्तव्याः सन्ति, तथा प्रकृतेरपि बहवः पुरुषा विमोचनीयाः सन्तीत्यर्थः ।

**तथा** च सकृत्सृष्ट्या कियत्पुरुषमोक्षेऽपि पुरुषान्तरमोक्षार्थं पुनः पुनः सृष्टिरिति भावः ॥ ४ ॥

**ननु "तस्माद्वा एतस्मादात्मन आकाशः संभूत** इत्यादिना परमेश्वरस्यापि स्रष्टृत्वश्रवणात्कथं प्रकृतिरेव स्रष्ट्री, तत्राह–

**"प्रकृतिवास्तवे च पुरुषस्याध्याससिद्धिः" ॥ ५ ॥**

चोऽप्यर्थः पुरुषस्याग्रे योज्यः । प्रकृतिवास्तवे=प्रकृतेर्मुख्ये स्रष्ट्रीत्वे सिद्धे पुरुषस्य च=पुरुषेश्वरस्याप्यध्याससिद्धिः=अध्यासः प्रकृत्युपरागस्तस्मात् स्रष्टृत्वसिद्धिरस्तीत्यर्थः ।

**तेन** युक्ता श्रुतिवागिति भावः ॥ ५ ॥

**ननु** प्रकृतेर्मुख्यं स्रष्ट्रीत्वमेवासिद्धं, तत्राह–

**"कार्य्यतस्तत्सिद्धेः" ॥ ६ ॥**

कार्य्यतः=महदादिभूतान्तकार्य्यतो लिङ्गात् तत्सिद्धेः=मुख्यस्रष्ट्रीत्वस्य तस्यसिद्धेरित्यर्थः ॥ ६ ॥

**ननु** प्रकृतेर्मुख्ये स्रष्ट्रीत्वे सिद्धे तत्प्रवृत्तिनिवृत्तिनियमो न स्यात, तत्राह–

**"चेतनोद्देशान्नियमः कण्टकमोक्षवत्" ॥ ७ ॥**

चेतनोद्देशात्=जगदधिपतिरीश्वरोऽत्र चेतनः **'चेतनश्चेतनानाम्'** इति श्रुतेस्तस्योद्देशः=अभिलाषस्तस्मान्नियमः=स्वार्थं परार्थं वा प्रकृतिप्रवृत्तिनिवृत्तिनियमः, कण्टकमोक्षवत्=सूच्यग्रभागः कण्टकस्तस्य यथा राजाभिलाषादद‍ण्ड्येषु मोक्षस्य, दण्ड्येषु च प्रयोगस्य, नियम इत्यर्थः ॥७॥

**ननु** यस्याभिलाषमात्रात्प्रकृतेः प्रवृत्तिनिवृत्तिनियमस्तस्य साक्षात्स्रष्टृत्वं किं न स्यात, किमन्ययोगकल्पनया ? तत्राह–

**"अन्ययोगेऽपि तत्सिद्धिर्नाञ्जस्येनायोदाहवत्" ॥ ८ ॥**

अपिरवधारणे । अन्ययोगेऽपि=प्रकृतियोगे सत्येव तत्सिद्धिः=पुरुषेश्वरस्य स्रष्टृत्वसिद्धिर्भवति नाञ्जस्येन=न साक्षात् । अयोदाहवत्=अयसो दाहकत्ववदित्यर्थः ।

---

१ तै० ब्रह्मानं० व० अनु ०१ ।

प्रकृतियोगाभावे कस्येश्वरः स्यात्? जीवानामिति चेत्, तदागतस्तद्भोगापवर्गप्रदात्र्याः प्रकृतेरपि सनातनो योग इति भावः ॥ ८ ॥

ननु केयं सृष्टिर्नाम ? तत्राह–

**" रागविरागयोर्योगः सृष्टिः " ॥ ९ ॥**

**राग**विरागयोः=रञ्जनात्मकत्वाद्रागः प्रकृतिः, नित्यमुदासीनत्वाद् विगतरागो जगदीश्वरः । तयोर्योगः=संबन्धः सृष्टिः=सृष्टिहेतुत्वात्सृष्टिरित्यर्थः ।

**योगः** सनातन इत्यसकृदुक्तं तेन सृष्टिरपि सनातनीति बोध्यम् ।

**राग**विरागयोरिति निमित्तसप्तमी, सांसारिकविषयेषु स्नेहो रागस्तदभावो विरागः । तत्र रागनिमित्ता सृष्टिर्विरागनिमित्तो योगः=मोक्ष इति भाष्यकृतः ॥ ९ ॥

**ननु** सा केन क्रमेण भवति ? तत्राह–

**" महदादि क्रमेण पञ्चभूतानाम् ॥ १० ॥**

**सृष्टि**रित्यनुवर्तते । महदादिक्रमेण=प्रकृतेर्महान् महतोऽहङ्कारोऽहङ्कारात्पञ्चतन्मात्राणि पञ्चतन्मात्रेभ्यः पञ्चभूतानीतिमहदादिक्रमेण पञ्चभूतानां=क्षितिजलज्योतिरनिलविहायसां सृष्टिरित्यर्थः ।

**यद्य**प्येतस्मादात्मन आकाशः संभूत इत्यादिश्रुतावादावेव पञ्चभूतानां सृष्टिः श्रूयते, तथापि महदादिक्रमेणैव तत्सृष्टिरिष्टेति भाष्यम् ॥ १० ॥

**ननु** प्रकृतिसृष्टितो महदादिसृष्टौ को विशेषः ? तत्राह–

**" आत्मार्थत्वात्सृष्टेर्नैषामात्मार्थ आरम्भः ॥ ११ ॥**

सृष्टेः=महदादिसृष्टेरात्मार्थत्वात्=आत्मा पुरुषस्तदर्थत्वान्नैषां=महदादीनामात्मार्थः=प्रकृतिवत्स्वार्थं आरम्भः=सृष्टिरित्यर्थः ।

प्रकृतिकर्त्रीका सृष्टिः परार्था स्वार्था च । महादादिकर्तृका तु केवलं परार्थैवेति विशेषः ॥ ११ ॥

**ननु** सर्वव्यवहारसिद्धौ दिक्कालौ कुतो न गणितौ, तत्राह–

**"दिक्कालावाकाशादिभ्यः" ॥ १२ ॥**

आदिपदेनोपाधीनां सङ्ग्रहः । तेनाकाशस्यैकत्वेऽप्युपाधिसंबन्धाद्

बहुत्वम् । दिक्कालौ=पूर्वपश्चिमदिनमासादिदिक्कालावाकाशादिभ्यः=तत्तदुपाधिसंबन्धविशिष्टाकाशेभ्यो व्यवहार्य्यावित्यर्थः ।

आकाशान्तर्भूताविति भावः ।

नित्यौ यौ दिक्कालौ, तावाकाशप्रकृतिभूतौ प्रकृतेर्गुणविशेषावेव । यौ च खण्डदिक्कालौ, तौ तु तत्तदुपाधिविशिष्टमाकाशमेवेति भाष्यकृतः ॥ १२ ॥

संप्रति महदादिकं लक्षणतः कार्य्यतश्च क्रमेण दर्शयति ।

**"अध्यवसायो बुद्धिः" ॥ १३ ॥**

अध्यवसायः=ईक्षणपूर्वक एवमेवेति निश्चयात्मको व्यापारः । क्रिया वृत्तिर्व्यापार इत्यनर्थान्तरम् । बुद्धिः=बुद्धेः=महतो लक्षणमित्यर्थः । क्रियाक्रियावतोरभेदविवक्षया सामानाधिकरण्यमिति वाचस्पतिमिश्राः॥ १३॥

**"तत्कार्य्यं धर्मादि" ॥ १४ ॥**

तत्कार्य्यं=तस्याः=महत्तत्त्वाख्याया बुद्धेः कार्य्यं धर्मादि=धर्मो ज्ञानं वैराग्यमैश्वर्य्यमित्यर्थः ॥ १४ ॥

**"महदुपरागाद्विपरीतम्"॥ १५॥**

महद्=तदेव बुद्ध्याख्यं महत्तत्त्वमुपरागात्=रजस्तमसोः संबन्धाद् विपरीतं=विपरीतकार्य्यकं=अधर्माज्ञानावैराग्यानैश्वर्य्यकार्यकं भवतीत्यर्थः ॥१५॥

अहंकारं लक्षयति ।

**"अभिमानोऽहङ्कारः" ॥ १६ ॥**

अभिमानः=अहमित्यभिमानोऽहङ्कारः=अहङ्कारस्यलक्षणमित्यर्थः । अभेदविवक्षया सामानाधिकरण्यम् ॥ १६ ॥

**"एकादशपञ्चतन्मात्रं तत्कार्य्यम्" ॥ १७ ॥**

एकादशेन्द्रियाणि । शब्दादिपञ्चतन्मात्रञ्चेति षोडशकोगणस्तत्कार्य्यम्=अहङ्कारकार्य्यमित्यर्थः ॥ १७ ॥

तत्रावान्तरविशेषमाह—

**"सात्त्विकमेकादशकं प्रवर्तते वैकृतादहङ्कारात्"॥ १८ ॥**

एकादशकम्=एकादशेन्द्रियं सात्त्विकं वैकृतात्=सात्विकादहंकारात्=अभिमानवृत्तिकात्प्रवर्तते=जायते इत्यर्थः ।

**शिष्टं** पञ्चतन्मात्रञ्चतामसंतामसाहंकारात्प्रवर्तते । चालकतया रजस्तूभयत्रान्वयीति शेषः ॥ १८ ॥

**ननु** कानि तान्येकादशेन्द्रियाणि ? तत्राह—

**"कर्मेन्द्रियबुद्धीन्द्रियैरान्तरमेकादशकम्" ॥ १८ ॥**

कर्मेन्द्रियाणि=वाक्पाणिपादपायूपस्थाख्यानि पञ्च । बुद्धीन्द्रियाणि=ज्ञानेन्द्रियाणि=चक्षुःश्रोत्रत्वग्रसनघ्राणाख्यानि पञ्च । एतैर्दशभिर्बाह्येन्द्रियैः सहान्तरं=अभ्यन्तरेन्द्रियं मन इत्येकादशकम्=एकादशेन्द्रियाणीत्यर्थः ।

इन्द्रस्य=संघातेश्वरस्य पुरुषस्य कर्मज्ञानसाधनमिन्द्रियमिति व्युत्पत्तिः। अहङ्कारकार्य्यत्वे सति करणत्वमिति लक्षणम् ॥ १९ ॥

**ननु** भूतविशेषगुणग्राहकानि तानि भौतिकानि किं न भवयुः ? तत्राह—

**"आहङ्कारिकत्वश्रुतेर्नभौतिकानि" ॥ २० ॥**

आहंकारिकत्वश्रुतेः=अहङ्कारकार्य्यत्वश्रवणान्न भौतिकानि=भूतकार्य्याणीत्यर्थः ।

**यद्यपीन्द्रियाणामाहङ्कारिकत्वप्रतिपादिका श्रुतिर्न काचन साक्षान्मिलति,** तथापि **'एतस्माज्जायतेप्राणो मनः सर्वेन्द्रियाणि च'**[1] इति भूतोत्पत्तेः प्रागिन्द्रियोत्पत्तिप्रतिपादनात् । **'तदैक्षत'**[2] **"सोहमस्मीत्यग्रे व्याहरत्ततोऽहन्नामाभवत्"**[3] इत्यादिश्रुत्यन्तरे महदहंकारोत्पत्तेश्चेतः पूर्वश्रवणादेषैव सा श्रुतिरिति कल्प्यतेऽनयैव चैषामाहङ्कारिकत्वश्रवणम् ।

**'अन्नमयं हि सोम्य मन'**[4] इत्यादिश्रुतिस्तु तेषामन्नकृतपटुत्वाभिप्रायतया नेतव्येति ध्येयम् ॥ २० ॥

---

१ मुं०२—खं०१—३॥२ छां०प्र०६—खं०२।३॥३वृ०अ०२ब्रा.४॥४ छां०प्रपा० ६ खं० ५ ।

नन्विन्द्रियाणामाहङ्कारिकत्वं नोपपद्यते 'अग्निं वागप्येति । वातं प्राणश्चक्षुरादित्यम्' इत्यादिश्रुत्या तेषामग्न्यादिषु भूतेषु लयश्रवणात् कारणे हि कार्य्यस्य लयो भवति, तत्राह—

"देवतालयश्रुतिर्नारम्भकस्य" ॥ २१ ॥

देवतालयश्रुतिः=देवतासु=दिव्यगुणकेष्वग्न्यादिष्विन्द्रियाणां लयप्रतिपादिका श्रुतिर्नारम्भकस्य=आरम्भककारणस्यावेदिका भवितुमर्हति । कुतः? अनारम्भकेऽपि भूतले जलबिन्दोरकार्य्यस्य लयदर्शनादित्यर्थः ॥ २१ ॥

नन्वेवन्तर्हि तानि नित्यानि सन्तु, तत्राह—

"तदुत्पत्तिश्रुतेर्विनाशदर्शनाच्च" ॥ २२ ॥

इन्द्रियाणीति प्रकरणलाभः । नेति पूर्वसूत्रादनुवर्तते । नित्यानीति शेषः । तदुत्पत्तिश्रुतेः='एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च' इति तेषामुत्पत्तिश्रुतेरुत्पन्नानां विनाशदर्शनाच्च न तानि नित्यानीन्द्रियाणीत्यर्थः ॥ २२ ॥

नन्वत एव गोलकमात्राणि तानि, नतु तद्व्यतिरिक्तानि, तत्राह—

"अतीन्द्रियमिन्द्रियं भ्रान्तानामधिष्ठानम्" ॥ २३ ॥

इन्द्रियं=चक्षुरादीन्द्रियमतीन्द्रियम्=इन्द्रियजन्यज्ञानागम्यम् । भ्रान्तानां=भ्रान्तिमापन्नानां बौद्धानां त्वधिष्ठानं=तदधिष्ठानं गोलकमेवेन्द्रियमित्यर्थः ॥ २३ ॥

ननु गोलकातिरिक्तं चेदिन्द्रियं, तर्ह्येकमेव शक्तिभेदात् तत्तद्गोलकस्थं सन्नानाकार्य्यं करिष्यति, किं नानाभ्युपगमेन? तत्राह—

"शक्तिभेदेऽपि भेदसिद्धौ नैकत्वम्" ॥ २४ ॥

शक्तिभेदेऽपि=शक्तीनां भेदाभ्युपगमेऽपि भेदसिद्धौ=इन्द्रियभेदसिद्धौ सत्यां नैकत्वं=नेन्द्रियस्यैकत्वमभ्युपगन्तुं शक्यमित्यर्थः ।

शक्तिभेदेन शक्त्याश्रयभेदस्य कल्पनादितिभावः ॥ २४ ॥

---

१ बृहद्–अ० ५–ब्रा० २ । २ मुं० २–खं० १+३ ।

ननु शक्तिभेदेन भेदकल्पनायां विरोधः प्रसज्येत। शक्तिभेदेऽपि तेजोभेदादर्शनात्, तत्राह—

"न कल्पनाविरोधः प्रमाणदृष्टस्य" ॥ २५ ॥

कल्पनाविरोधः=इन्द्रियभेदकल्पनायां विरोधो न=न प्रसज्यते। कुतः? प्रमाणदृष्टस्य=प्रमाणेन दृष्टस्य भेदस्य कल्पनादित्यर्थः।

तेजसि तु न प्रमाणेन दृष्टो भेद इति भावः ॥ २५ ॥

तत्र मनसि विशेषमाह—

"उभयात्मकं मनः" ॥ २६ ॥

उभयात्मकं=ज्ञानकर्मेन्द्रियात्मकं मनः=मन इन्द्रियमित्यर्थः ॥२६॥

नन्वेकस्याहंकारस्य भूतेन्द्रियात्मकं कार्य्यनानात्वं कुतो जातं? तत्राह—

"गुणपरिणामभेदान्नानात्वमवस्थावत्" ॥ २७ ॥

गुणपरिणामभेदात्=गुणानां सत्वरजस्तमसामुद्भवाभिभवलक्षणपरिणामविशेषान्नानात्वम्=एकस्याप्यहंकारस्य कार्य्यनानात्वम्। तत्रोदाहरणमवस्थावत्। यथैकस्यापि देहस्य गुणपरिणामभेदादवस्थानानात्वमित्यर्थः ॥ २७ ॥

संप्रति ज्ञानकर्मेन्द्रिययोरसाधारणीं वृत्तिं दर्शयितुं तद्विषयमाह—

"रूपादिरसमलान्त उभयोः" ॥ २८ ॥

रूपमादौ रसमलः=अन्नरसमलः पुरीषादिरन्ते यस्य स तथाभूतो विषय, उभयोः=ज्ञानेन्द्रियकर्मेन्द्रिययोरित्यर्थः।

दर्शनाद्यात्मिका द्वयोरसाधारणी वृत्तिरिति भावः।

तत्र रूपरसगन्धस्पर्शशब्दा ज्ञानेन्द्रियविषयाः। वचनविहरणादानानन्दमलाः कर्मेन्द्रियविषया इति विवेकः ॥ २८ ॥

ननु प्रकाशकत्वादिन्द्रियाणामेव द्रष्टृत्वादिकमस्तु, कृतं तदतिरिक्तपुरुषाभ्युपगमेन, तत्राह—

"द्रष्टृत्वादिरात्मनः करणत्वमिन्द्रियाणाम्" ॥ २९ ॥

द्रष्टृत्वादिः=द्रष्टृत्वादिकं वक्तृत्वादिकञ्चात्मनः=पुरुषस्यैव, केवलं दर्शनादिवृत्तौ करणत्वं=साधनत्वमिन्द्रियाणां=चक्षुरादीन्द्रियाणामित्यर्थः।

तथैवं संकल्पयितृत्वादिकमित्यपि द्रष्टव्यम् ॥ २९ ॥

अन्तःकरणत्रयस्यासाधारणीं वृत्तिमाह—

**" त्रयाणां स्वालक्षण्यम् " ॥ ३० ॥**

त्रयाणां=महदहंकारमनसां स्वालक्षण्यं=महतोऽध्यवसायोऽहंकारस्याभिमानो मनसः संकल्प इति स्वंस्वं लक्षणमेवासाधारणीवृत्तिर्येषां तानि स्वलक्षणानि तेषां भावस्तत्त्वं=स्वलक्षणासाधारणवृत्तिकत्वमित्यर्थः ॥ ३० ॥

बाह्याभ्यन्तरकरणानामसाधारणीं वृत्तिमुक्त्वा साधारणीं वृत्तिमाह—

**"सामान्यकरणवृत्तिः प्राणाद्या वायवः पञ्च" ॥ ३१ ॥**

सामान्यकरणवृत्तिः=सामान्या=साधारणी चासौ करणवृत्तिः=समस्तकरणवृत्तिः प्राणाद्याः=प्राण आदिभवो येषां ते तथा=प्राणापानसमानोदानव्याननामानो वायवः=वायुवत्सञ्चरणशीलाः पञ्च=पञ्चसंख्याका इत्यर्थः ।

वायुवत्सञ्चरणशीलाःप्राणाद्याःपञ्च साधारणी समस्तकरणवृत्तिरिति भावः। तथा चोक्तं योगभाष्यकृद्भिरप्येकोनचत्वारिंशसूत्रे विभूतिपादस्थे भाष्ये—

**"समतोन्द्रियवृत्तिः प्राणादिलक्षणा इति ।"**

यत्तु योगभाष्यटिप्पण्याम् 'अत्र समस्तेन्द्रियशब्देनाऽन्तःकरणत्रयमेव गृह्यते,नतु बाह्येन्द्रियाण्यपि । सुषुप्तौ चक्षुराद्यपगमेऽपि प्राणव्यापारदर्शनात् । अत एव कपिलाचार्य्यैरीश्वरकृष्णैश्चान्तःकरणप्रस्तावे '**त्रयाणां स्वालक्षण्यम्**' इत्यनेनासाधारणीरध्यवसायादिवृत्तीर्यथायथमुक्त्वा '**सामान्यकरणवृत्तिः प्राणाद्या वायवः पञ्च**'इत्यभिहितम्, इति प्रलपति बालरामोदासीनः । तन्नितान्तामङ्गलम् । पूर्वोत्तरानुसन्धानाभावात्।नहि कपिलाचार्य्यैरीश्वरकृष्णैश्चान्तःकरणप्रस्तावे '**त्रयाणां स्वालक्षण्यम्**'इत्यनेनासाधारणीरध्यवसायादिवृत्तीरुक्त्वा 'सामान्यकरणवृत्तिः प्राणाद्या वायवः पञ्चे-त्यभिहितम्, येन बालोक्तिःकथञ्चित्प्रामाणिकी भवेत्। किन्तु करणमात्रप्रस्तावे पूर्वंज्ञानकर्मेन्द्रियाणामसाधारणीरालोचनादिवृत्तीरन्तःकरणत्रयस्यचासा-

धारणीरध्यवसायादिवृत्तीरभिधाय पश्चात्–'**सामान्यकरणवृत्तिः प्राणाद्या वायवः पञ्च**' इत्यभिहितम्। अत एव च वाचस्पतिमिश्रैः '**द्वयीन्द्रियाणां वृत्तिर्बाह्याभ्यन्तरी च। बाह्या रूपाद्यालोचनलक्षणा, आभ्यन्तरी तु जीवनम्। स हि प्रयत्नभेदः शरीरोपगृहीतमारुतक्रियाभेदहेतुः सर्वकरणसाधारणो यथाचाहुः कापिलाः**' इति ससाक्षिकं व्याख्यातं। चेदत्र समस्तेन्द्रियशब्देनान्तःकरणत्रयस्य ग्रहणं युक्तममंस्यत। कथं नाचार्य्यो व्याख्यास्यत्। कथञ्च प्रत्युत सर्वकरणसाधारण इति व्यारेत्, कथञ्च तत्र कापिलानां साक्ष्यमुदाहरेत्, नचाचार्य्या अपि वञ्चका भवन्ति। येनान्यथा ग्राहयेयुरिति स्वयमेवोह्यम्। किञ्च समस्तेन्द्रियशब्देनान्तःकरणत्रयस्य ग्रहणे जिज्ञासापि न निवर्त्तते, किन्त्ववशिष्यते। कस्मादाचार्य्यैर्बाह्याभ्यन्तरेन्द्रियाणामसाधारणीरालोचनादिवृत्तीरभिधाय पश्चादन्तःकरणत्रयस्यैव साधारणी वृत्तिरभिहिता न वाह्येन्द्रियदशकस्येति। तन्निवृत्तेश्चावश्यकत्वात्कोऽन्यस्तदुपायः स्याद्वालकस्येति नानाच्योऽसौ महद्भिः। किञ्च 'सुषुप्तौ चक्षुराद्यपगमेऽपि प्राणव्यापारदर्शनादि'त्युपपत्तिरपि बालस्वामिनस्तस्यानुपपत्तिसमैव। नहि सुषुप्ताविन्द्रियाणामपगमः कस्यापीष्टतमः। किन्तु तदुपरमः। तस्य च ज्ञानकर्मलक्षणवृत्त्युपरमेणाप्युपपत्तिः सुसाध्वीति न किञ्चिदवद्यमास्ति। तथा चार्य्यमर्य्यादामतिक्रम्य सर्वथा विरुद्धप्रलापेन वार्तिककारं मृषाभिपीडयन् वालोऽसौ कथं नार्य्यसंसदि गलहस्तितो भवेदिति स एव प्रष्टव्यो निखिलशास्त्रनिष्णातंमन्यो वालिशो वाल इत्यलमिह विस्तरेण। तस्य सांख्यतत्त्वकौमुदीटीकायां **चित्तप्रसादिन्यां** दर्शितत्वात्॥ २९॥

**बाह्याभ्यन्तरभेदेन** त्रयोदशविधं करणम्। साधारणासाधारणभेदेन तद्वृत्तिद्वैविध्यञ्च प्रदर्शितम्। इदानीं तदसाधारणीषु वृत्तिषु क्रमाक्रमौ प्रदर्शयति।

"क्रमशोऽक्रमशश्चेन्द्रियवृत्तिः" ॥ ३२ ॥

क्रमशः=कस्मिँश्चिद्विषये कुतश्चिन्निमित्तात् क्रमेण, कस्मिँश्चिच्च कुतश्चिन्निमित्तादक्रमशश्च=अन्तरेणापिक्रमं=युगपदितियावादिन्द्रियवृत्तिः=चक्षुरादिबुद्ध्यन्तानामिन्द्रियाणां वृत्तिः=दर्शनसङ्कल्पाभिमानाध्यवसायलक्षणा क्रिया भवतीत्यर्थः ॥ ३२ ॥

नन्विन्द्रियलक्षणद्वारभेदेन भिन्ना अपि बुद्धिवृत्तयो वस्तुतः कतिधा सन्ति ? तत्राह—

"वृत्तयः पञ्चतय्यः क्लिष्टाक्लिष्टाः ॥ ३३ ॥

वृत्तयः=बुद्धिसत्त्ववृत्तयः पञ्चतय्यः=प्रमाणविपर्ययविकल्पनिद्रास्मृतिभेदात् पञ्च प्रकारा भवन्ति । तत्र यास्तावद्राजस्यास्तामस्याश्च ताः क्लिष्टाः । याः पुनः सात्विक्यस्ता अक्लिष्टा इत्यर्थः ॥ ३३ ॥

ननु वृत्तिनिवृत्तौ सत्यामसत्यां च कीदृशः पुमान् ? तत्राह—

"तन्निवृत्तावुपशान्तोपरागः स्वस्थः" ॥ ३४ ॥

तन्निवृत्तौ=तासां वृत्तीनां विरामदशायामुपशान्तोपरागः=निवृत्ततत्संबन्धः पुरुषः स्वस्थः=स्वरूपस्थितस्तदनिवृत्तौ तु तत्प्रतिबिम्बिततया तदाकारतां भजमान इवास्वस्थो भवतीत्यर्थः ॥ ३४ ॥

तत्रोदाहरणमाह—

" कुसुमवच्च मणिः " ॥ ३५ ॥

कुसुमवच्च=यथा जपाकुसुमेन मणिः=स्फटिको मणिरस्वस्थः, कुसुमनिवृत्तौ च रागशून्यः स्वस्थ इत्यर्थः ॥ ३५ ॥

ननु किमर्थं करणप्रवृत्तिः ? कुतश्च ? तत्राह—

" पुरुषार्थं करणोद्भवोऽप्यदृष्टोल्लासात् " ॥ ३६ ॥

अदृष्टोल्लासात्=अभिव्यक्तादृष्टनिमित्तात्करणोद्भवोऽपि=प्रधानप्रवृत्तिनि

दर्शनार्थोऽपिः । प्रधानप्रवृत्तिवत्करणप्रवृत्तिरपि पुरुषार्थं=पुरुषस्य स्वामिनः कृते स्वत एव भवतीत्यर्थः ॥ ३६ ॥

**परार्थं** स्वतः प्रवृत्तौ निदर्शनमाह—

**"धेनुवद् वत्साय" ॥ ३७ ॥**

धेनुवत्=यथा धेनुर्वत्साय=वत्सार्थं स्वयमेव क्षीरं स्रवति । नान्यं प्रयत्नमपेक्षते । तथा पुरुषार्थं स्वयमेव करणानि प्रवर्तन्ते इत्यर्थः ॥ ३७ ॥

**ननु** कतिविधं करणं ? तत्राह—

**"करणं त्रयोदशविधमवान्तरभेदात्" ॥ ३८ ॥**

अवान्तरभेदात्=बाह्याभ्यन्तरभेदात्करणं त्रयोदशविधं=बुद्ध्यहङ्कारमनांसीत्यन्तस्त्रयम् । बाह्यानि चक्षुरादीनि दशेति त्रयोदशविधा यस्य, तदित्यर्थः ॥ ३८ ॥

**ननु** कस्मादिन्द्रियेषु करणत्वं ? तत्राह—

**"इन्द्रियेषु साधकतमत्वगुणयोगात्कुठारवत्" ॥ ३९ ॥**

इन्द्रियेषु=चक्षुरादिबाह्याभ्यन्तरेन्द्रियेषु साधकतमत्वगुणयोगात्=अतिशयेनज्ञानक्रियासाधकत्वलक्षणगुणसंबन्धात्करणत्वं=व्यापारवदसाधारणकारणत्वम्। कुठारवत्=यथा छिदादिक्रियासाधकतमत्वगुणयोगात्कुठारे करणत्वमित्यर्थः ।

**व्यापारत्वञ्च** तज्जन्यत्वे सति तज्जन्यजनकत्वमिति ध्येयम् ॥ ३९ ॥

**नन्वनयोर्बाह्याभ्यन्तरयोरुभयोः** किं प्रधानं, तत्राह—

**"द्वयोः प्रधानं मनो लोकवद्भृत्येषु" ॥ ४० ॥**

द्वयोः=बाह्याभ्यन्तरयोरुभयोः प्रधानं=मुख्यं मनः=मननवृत्तिकं बुद्धिसत्त्वमेव, भृत्येषु=भृत्यवर्गेषु लोकवत्=लोकसिद्धस्वामिवदित्यर्थः ।

**तत्र** बाह्येभ्यः प्रधानं मनः, मनसः प्रधानमहंकारः, ततश्च बुद्धिसत्त्वमिति विवेकः ॥ ४० ॥

**ननु** तत्प्राधान्ये को हेतुः ? तत्राह—

**"अव्यभिचारात्" ॥ ४१ ॥**

इन्द्रियान्तराणां व्यभिचारेऽपि ज्ञानमात्रे मनसो व्यभिचाराभावादित्यर्थः ॥ ४१ ॥

द्वितीयहेतुमाह—

**"तथाऽशेषसंस्काराधारत्वात्" ॥ ४२ ॥**

हेत्वन्तरसूचनाय तथाशब्दः । अनुभवजन्यनिखिलसंस्काराश्रयत्वादित्यर्थः ॥ ४२ ॥

तृतीयहेतुमाह—

**"स्मृत्याऽनुमानाच्च" ॥ ४३ ॥**

स्मृत्या=पूर्वानुभूतपदार्थविषयिण्या स्मृतिलक्षणयाऽसाधारणवृत्त्याऽनुमानाच्च=मनःप्राधान्यानुमानाच्चेत्यर्थः ।

**यद्वा** संस्कारा एव न सन्ति कुतो बुद्धेस्तदाधारत्वम् । तत्राह—'**स्मृत्याऽनुमानाच्च**' । पूर्वानुभूतस्मृत्या लिङ्गभूतया तज्जनकसंस्काराणामनुमानाच्च मनसस्तदाधारत्वमित्यर्थः ॥ ४३ ॥

**नन्वेवं** बुद्धिरेव करणमस्तु किं करणान्तराभ्युपागमेन, तत्राह—

**"संभवेन्न स्वतः" ॥ ४४ ॥**

द्वारभूतैश्चक्षुरादिकरणैर्विना बुद्धेः स्वतः करणत्वं न संभवेत्=न संभवतीत्यर्थः ।

**बहिरस्वातन्त्र्यादिति** भावः ॥ ४४ ॥

**ननु** किन्निबन्धनस्तर्हि करणेषु गुणप्रधानभावः ? तत्राह—

**"आपेक्षिको गुणप्रधानभावः क्रियाविशेषात्" ॥४५॥**

क्रियाविशेषात्=करणत्वे समानेऽपि व्यापारविशेषान्निमित्तादापेक्षिकः=परस्परापेक्षानिर्वृतो गुणप्रधानभावः=गुणभावः प्रधानभावश्चेत्यर्थः ।

चक्षुरादिदशकमपेक्ष्य मनः प्रधानम् । तदपेक्ष्य चाहंकार, स्तदपेक्ष्य च बुद्धिरिति भावः ॥ ४५ ॥

नन्वेवं गुणप्रधानभावमापन्नानि तानि कस्मात्पुरुषार्थं चेष्टन्ते? तत्राह—

**"तत्कर्मार्जितत्वात्तदर्थमभिचेष्टा लोकवत्" ॥ ४६ ॥**

तत्कर्मार्जितत्वात्=पुरुषस्य कर्म=तत्कर्म, तेन=पुरुषादृष्टेनार्जितत्वात्=संपादितत्वात् तदर्थं=पुरुषार्थमभिचेष्टा=करणानामीहा।लोकवत्=यथा लोके देवदत्तकर्मार्जितं कुठारादि देवदत्तार्थं छिदादिक्रियां करोतीत्यर्थः ॥४६॥

नन्वेवं पुरुषार्थं करणानां क्रियातौल्ये कस्माद् बुद्धेरेव प्राधान्यं नेतरेषां? तत्राह—

**"समानकर्मयोगे बुद्धेः प्राधान्यं लोकवल्लोकवत्"॥४७॥**

अध्यायपरिसमाप्तिसूचनाय वीप्सा। समानक्रियायोगे=बुद्ध्यादिकरणानां पुरुषार्थत्वेन समानेऽपि क्रियासम्बन्धे बुद्धेः=बुद्धेरेव प्राधान्यं=क्रियाविशेषनिमित्तं मुख्यत्वम्। लोकवत्=यथा लोके राजामात्यप्रभृतीनां राजाज्ञापरिपालनरूपकर्मयोगे समानेऽपि राजामात्यस्यैव प्राधान्यं नेतरेषामित्यर्थः।

चक्षुरादीनि विषयानादाय बुद्ध्यै प्रयच्छन्ति। बुद्धिश्चात्मने पुरुषाय राजमन्त्रिवत्पुरुषेश्वराय प्रयच्छति। तस्मान्मन्त्रिवत्प्रधानं बुद्धिरिति भावः ॥ ४७ ॥

प्रकृतेरीश्वराधीनं पुरुषाय प्रवर्तनम्।
ततोऽष्टादशतत्त्वानि द्वितीयेऽस्मिन्निरूपितम् ॥ १ ॥

**इति श्रीमत्परमहंसपरिव्राजकाचार्य्योदासीनवर्य्यात्मारामभगवत्पादशिष्यहरिप्रसादकृतायां सांख्यसूत्रवृत्तौ प्रधानकार्य्याध्यायो द्वितीयः ॥ २ ॥**

---

## अथ तृतीयोऽध्यायः ।

क्रमप्राप्तं महाभूतोत्पादमाह—

"अविशेषाद्विशेषारम्भः" ॥ १ ॥

अविशेषात=शान्तघोरमूढतालक्षणविशेषरहितात्तन्मात्रपञ्चकाद्भूतसूक्ष्माद् विशेषारम्भः=विशेषाणां=शान्तघोरमूढतालक्षणविशेषवतां व्योमानिलतेजोऽप्पृथिवीनां पञ्चमहाभूतानामारम्भः=उत्पाद इत्यर्थः ॥ १ ॥

ननु महाभूतपञ्चकात्कस्य पुनरुत्पादः ? तत्राह—

"तस्माच्छरीरस्य" ॥ २ ॥

तस्मात्=महाभूतपञ्चकाच्छरीरस्य=स्थूलस्यास्य शरीरस्यारम्भ इत्यर्थः॥२॥

ननु स्थूलस्यास्य दृष्टनष्टप्रायत्वादशरीरः पुमान् कथं भोगापवर्गाय देहाद्देहान्तरं गच्छेत् ? तत्राह—

"तद्बीजात्संसृतिः"॥ ३ ॥

तद्बीजात्=तस्य स्थूलशरीरस्य बीजं=निमित्तं यत् साहङ्कारबुद्धीन्द्रियतन्मात्रसप्तदशकारब्धं साशयं लिङ्गशरीरम् । तस्मादस्य भोक्तुरात्मनः संसृतिः=ऐहिकामुष्मिका गतिरित्यर्थः ॥ ३ ॥

ननु किं पर्य्यन्तं महदादयः शरीरमारभन्ते? तत्राह—

"आ विवेकाच्च प्रवर्तनमविशेषाणाम्" ॥ ४ ॥

आविवेकाच्च=चोऽवधारणे । विवेकप्रत्ययपर्य्यन्तमेवाविशेषाणां=शान्तघोरमूढता लक्षणविशेषरहितानां महदादीनां प्रवर्तनं=शरीरारम्भाय प्रवर्तनमित्यर्थः ॥ ४ ॥

ननु कुत एतदवगम्यते ? तत्राह—

"उपभोगादितरस्य" ॥ ५ ॥

इतरस्य=अनुत्पन्नविवेकप्रत्ययस्य पुरुषस्योपभोगात्=प्रकृत्या सांसारिक-भोगावश्यंभावादित्यर्थः ॥ ५ ॥

ननु संसृतिवेलायामस्य भोक्तुरात्मनः सुखदुःखोपभोगो भवति न वा ? तत्राह—

**"सम्प्रति परिमुक्तो द्वाभ्याम्" ॥ ६ ॥**

सम्प्रति=संसृतिवेलायां पुरुषो द्वाभ्यां सुखदुःखाभ्यां परिमुक्तः=सर्वतो मुक्तः=निर्मुक्तो भवतीत्यर्थः ।

सम्मूर्च्छितत्वादिति भावः ॥ ६ ॥

ननु यस्माल्लिङ्गशरीरादस्य पुंसः संसृतिस्तस्य स्थूलशरीरात्को विशेषः ? तत्राह—

**"मातापितृजं स्थूलं प्रायश इतरन्न तथा" ॥ ७ ॥**

स्थूलं=स्थूलं शरीरं प्रायशः=बाहुल्येन मातापितृजं=योनिजं भवति। सर्गादावयोनिजस्यापि स्मरणात् प्रायश इत्युक्तम् । इतरत्=सूक्ष्मं शरीरं तु न तथा=न मातापितृजमित्यर्थः ॥ ७ ॥

ननु तथापि भोगायतनत्वं कस्य ? तत्राह—

**"पूर्वोत्पत्तेस्तत्कार्य्यत्वं भोगादेकस्य नेतरस्य" ॥ ८ ॥**

पूर्वोत्पत्तेः=पूर्वं=सर्गादावेवोत्पत्तिः=जन्म यस्य, तस्य लिङ्गशरीरस्यैकस्य=प्रतिपुरुषं नियमेनैकस्यैव भोगात्=सुखदुःखानुभवात् तत्कार्य्यत्वं=भोगायतनत्वम् । भोगकर्तव्यताया अत्रैव युक्तत्वात् । नेतरस्य=स्थूलशरीरस्येत्यर्थः ।

मृतशरीरे व्यभिचारादिति भावः ॥ ८ ॥

ननु किं तल्लिङ्गशरीरं ? तत्राह—

**"सप्तदशैकं लिङ्गम्" ॥ ९ ॥**

सप्तदश=एकादशेन्द्रियाणि, पञ्चतन्मात्राणिभूतसूक्ष्माणि, साहङ्कारा बुद्धिश्चेति सप्तदश मिलित्वा लिङ्गं=लिंगशरीरम् । तच्चैकं=प्रतिपुरुषमेकमित्यर्थः ॥ ९ ॥

**ननु** लिङ्गशरीरस्य तस्य सर्वत्र तुल्यत्वात् कथं दैवतिर्यगादिभेदेन भेदः? तत्राह—

**"व्यक्तिभेदः कर्मविशेषात्" ॥ १० ॥**

व्यक्तिभेदः=व्यक्तेर्लिङ्गशरीरस्य भेदः कर्मविशेषात्=जीवानामदृष्टविशेषादित्यर्थः ॥ १० ॥

**ननु** तथापि लिङ्गशरीरस्य भोगायतनत्वे तत्रैव शरीरव्यवहारे स्थूलेऽस्मिन् लोकसिद्धः शरीरव्यवहारः कथं स्यात्? तत्राह—

**"तदधिष्ठानाश्रये देहे तद्वादात्तद्वादः" ॥ ११ ॥**

तदधिष्ठानाश्रये=तस्य कर्मविशेषस्य यदधिष्ठानं बुद्धितत्त्वं, तस्याश्रये लिङ्गशरीरे तद्वादात्=तस्य शरीरस्य वादः=व्यवहारस्तद्वादस्तस्माद् देहे=लिङ्गशरीरस्याश्रयीभूते स्थूलशरीरेऽपि तद्वादः=शरीरव्यवहार इत्यर्थः ॥ ११ ॥

**नन्वस्तु** तर्हि बुद्धित एव पुरुषस्य भोगः, कृतं सूक्ष्मशरीरेणाप्रामाणिकेन, तत्राह—

**"न स्वातन्त्र्यात् तदृते, छायावच्चित्रवच्च" ॥ १२ ॥**

तदृते=लिंगशरीरं विना न स्वातन्त्र्यात्=स्वतन्त्रतया बुद्धिसत्त्वमवस्थातुमर्हति, दूरे ततो भोगः । तत्रोदाहरणं, छायावच्चित्रवच्च=यथाश्रयं विना छाया चित्रञ्च न तिष्ठतीत्यर्थः ॥ १२ ॥

**नन्वस्तु** तर्हि लिंगशरीरेणैव पुरुषस्य भोगः, कृतं स्थूलशरीरेण, तत्राह—

**"मूर्त्तत्वेऽपि न संघातयोगात् तरणिवत्" ॥ १३ ॥**

स्वातन्त्र्यादिति पूर्वसूत्रादनुवर्तते । मूर्त्तत्वेऽपि=लिङ्गशरीरस्य स्थूलशरीरवन्मूर्त्तत्वेऽपि न तेन स्वातन्त्र्यात् पुरुषस्य भोगः संभवति । किन्तु संघातयोगात्=स्थूलशरीरसंबन्धात् । तत्रोदाहरणं तरणिवत्=यथा संघातयोगादेव सहस्ररश्मितो भोग इत्यर्थः ॥ १३ ॥

**ननु** तत्सूक्ष्मं शरीरं किं परिमाणं ? तत्राह—

**"अणुपरिमाणं तत्कृतिश्रुतेः ॥ १४ ॥**

न इति पूर्वसूत्रादनुवर्तते । तत्=लिङ्गशरीरमणुपरिमाणं न, किन्तु मध्यमपरिमाणम् । कुतः ? कृतिश्रुतेः= **'एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च'** इति तत्कृतेः=करणस्य=निर्माणस्य=श्रुतेः=श्रवणादित्यर्थः ॥ १४ ॥

**मध्यमपरिमाणत्वे हेत्वन्तरमाह—**

**"तदन्नमयत्वश्रुतेश्च" ॥ १५ ॥**

**'अन्नमयं हि सोम्य मन आपोमयः प्राणस्तेजोमयी वाग्'** इति तस्य लिङ्गशरीरस्यांशतोऽन्नमयत्वस्य=अन्नसंसृष्टसजातीयांशप्रचुरत्वस्य श्रवणाच्च मध्यमपरिमाणं तदित्यर्थः ॥ १५ ॥

**ननु** भवतु मध्यमपरिमाणं लिङ्गम् । तथाप्यचेतनानि तानि किमर्थं संसरंति ? तत्राह—

**"पुरुषार्थं संसृतिर्लिङ्गानां सूपकारवत्" ॥ १६ ॥**

पुरुषार्थं=पुरुषाणां भोगापवर्गार्थं लिङ्गानां=लिङ्गशरीराणां संसृतिः=ऐहिकामुष्मिकागतिः । तत्रोदाहरणं सूपकारवत्=यथा राज्ञः सूपकाराणां पाकशालायां गतिस्तदर्थमेव भवति नात्मार्थमित्यर्थः ॥ १६ ॥

**एवं** लिङ्गशरीरं स्वरूपपरिमाणाभ्यां विचार्य्य स्थूलशरीरं विचारयन्नाह—

**"पाञ्चभौतिको देहः" ॥ १७ ॥**

पाञ्चभौतिकः=व्योमानिलतेजोऽप्पृथिवीनां पञ्चभूतानां परिणामो देहः=स्थूलशरीरमित्यर्थः ॥ १७ ॥

**मतान्तरमाह—**

---

१ मुं०२ खं० १—३॥ २ छां०प्रपा० ६—खं० ५।

"चातुर्भौतिकमित्येके ॥ १८ ॥

चातुर्भौतिकं=व्योमापहाय चतुर्णां भूताना परिणामः स्थूलदेह इत्येके इत्यर्थः ॥ १८ ॥

अपरं मतमाह—

" ऐकभौतिकमित्यपरे ॥ १९ ॥

एकभूतस्य पृथिवीमात्रस्य परिणामः स्थूलो देह इत्यपरे इत्यर्थः ॥ १९ ॥

प्रसंगाद्देहचैतन्यवादं निरस्यति ।

"न सांसिद्धिकं चैतन्यं प्रत्येकादृष्टेः"॥ २० ॥

प्रत्येकादृष्टेः=पृथक्कृतेषु भूतेष्वेकैकस्मिन् चैतन्यादर्शनाद् भौतिकस्य देहस्य न सांसिद्धिकं=न स्वाभाविकं चैतन्यं, किन्तु पुरुषोपाधिकमित्यर्थः ॥ २० ॥

स्वाभाविके चैतन्ये बाधकान्तरमाह—

"प्रपञ्चमरणाद्यभावश्च" ॥ २१ ॥

आदिना सुषुप्तेः संग्रहः । देहस्य स्वाभाविके चैतन्येऽभ्युपगमे प्रपञ्चे=जगत्यां मरणस्य सुषुप्तेश्चाभावः प्रसज्येतेत्यर्थः ।

स्वभावसिद्धस्य चैतन्यस्याशक्यलोपतया कस्यापि सुषुप्तिमरणे न स्याताामिति भावः ॥ २१ ॥

यदुक्तं प्रत्येकादृष्टेरिति, तत्राशंक्य दृष्टान्तवैषम्येण निराचष्टे ।

"मदशक्तिवच्चेत प्रत्येकपरिदृष्टे सांहत्ये तदुद्भवः"॥२२॥

मदशक्तिवत=ननु यथा मदशक्तिः प्रत्येकद्रव्यावृत्तिरपि मिलितेषु तेषूद्भवति, तथा प्रत्येकभूतादृष्टमपि चैतन्यं मिलितेषु तेषूद्भविष्यतीति चेद्=यद्युच्यते, तदा न=न वाच्यम् । कुतः? प्रत्येकपरिदृष्टे=यतस्तत्रापि सूक्ष्मतया प्रत्येकं मादकत्वे परिदृष्टे सति सांहत्ये=समुदाये तदुद्भवः=तस्या मदशक्तेरुद्भवः=प्रभवो नतु प्रत्येकादृष्टेरित्यर्थः ॥ २२ ॥

**नन्वस्तु** देहस्य पुरुषोपाधिकं चैतन्यं, तथापि पुरुषस्य तस्य मुक्तिः कथं स्यात्? तत्राह–

**"ज्ञानान्मुक्तिः" ॥ २३ ॥**

ज्ञानात्=सत्त्वपुरुषयोर्विवेकज्ञानान्मुक्तिः=शरीरसंबन्धहेतुकस्य त्रिविधदुःखस्यात्यन्तनिवृत्तिरित्यर्थः ॥ २३ ॥

**ननु** बन्धः कथं? तत्राह–

**"बन्धो विपर्य्ययात्" ॥ २४ ॥**

विपर्य्ययात्=विवेकज्ञानविपरीतादविवेकाद्बन्धः=शरीरसंबन्धहेतुकदुःखत्रययोग इत्यर्थः ॥ २४ ॥

**ननु** ज्ञानान्मुक्तिरित्ययुक्तं, कर्मणोऽपि तत्र हेतुत्वात्, तत्राह–

**"नियतकारणत्वान्न समुच्चयविकल्पौ" ॥ २५ ॥**

नियतकारणत्वात्=ज्ञानस्य मुक्तिं प्रति नियमेन कारणत्वान्न समुच्चयविकल्पौ=न मोक्षोपजनने तस्य कर्मणा समुच्चयः, कदाचिज्ज्ञानात्कदाचित्कर्मण इति विकल्पो वेत्यर्थः ॥ २५ ॥

**किञ्च।**

**"स्वप्नजागराभ्यामिव मायिकामायिकाभ्यां नोभयोर्मुक्तिः पुरुषस्य" ॥ २६ ॥**

पूर्वसूत्रात्समुच्चयविकल्पौ विभक्तिविपरिणामेनानुवर्तेते। नोभयोः=ज्ञानकर्मणोर्विकल्पसमुच्चयाभ्यां पुरुषस्य मुक्तिः। किन्तु, ज्ञानादेव। **'तमेव विदित्वाऽतिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय'** इति[1] श्रुतेः। तत्रोदाहरणं स्वप्नजागराभ्यामिव मायिकामायिकाभ्यां=यथा मायिकामायिकाभ्यां=कल्पिताकल्पिताभ्यां स्वप्नजागराभ्यां=स्वप्नजागरपदार्थाभ्यां, विकल्पिताभ्यां वा समुच्चिताभ्यां वा, न पुरुषस्य बुभुक्षातो मुक्तिः, किन्तु जागरपदार्थादेव, तथेत्यर्थः ॥ २६ ॥

---

१ यजुः– अ० ३१–मं० १८।

ननु माभूतां नित्येन कर्मणा ज्ञानस्य विकल्पसमुच्चयौ । नैमित्तिकेन तु तौ किं न स्यातां ? तत्राह—

"इतरस्यापि नात्यन्तिकम्" ॥ २७ ॥

इतरस्यापि=नित्यवन्नैमित्तिकस्यापि कर्मणो नात्यन्तिकं=नान्तमतिक्रान्तं फलम् । अतस्तेनापि विकल्पसमुच्चयौ ज्ञानस्य नेत्यर्थः ॥ २७ ॥

ननु माभूतां नैमित्तिकेनापि कर्मणा ज्ञानस्य विकल्पसमुच्चयौ । काम्येन कर्मणा सेत्स्यतः, तत्राह—

"सङ्कल्पितेऽप्येवम्" ॥ २८ ॥

नात्यन्तिकमित्यनुवर्तते । संकल्पितेऽपि=काम्ये कर्मण्यप्येवं=नित्यनैमित्तिककर्मवन्नात्यन्तिकं फलम् । अतस्तेनापि तस्य तौ न स्त इत्यर्थः॥२८॥

नन्वेवं यस्य मोक्षोपजनने केनापि कर्मणा विकल्पसमुच्चयौ नस्त स्तज्ज्ञानं कुतो जायतां ? तत्राह—

"भावनोपचयाच्छुद्धस्य सर्वं प्रकृतिवत्" ॥ २९ ॥

सर्वं=निखिलं वेदोक्तं कर्म कुर्वतः शुद्धस्य=शुद्धान्तःकरणस्य भावनोपचयात्=भावना=ध्यानं, तस्योपचय उत्कर्षस्तस्माज्ज्ञानं जायते इति शेषः। तत्रोदाहरणं प्रकृतिवत्=प्रकृत्या शुद्धान्तःकरणवादित्यर्थः ॥ २९ ॥

ननु किं तद्ध्यानं ? तत्राह—

"रागोपहतिर्ध्यानम्" ॥ ३० ॥

रागोपहतिः=चित्तचाञ्चल्यहेतुविषयानुरागो रागः, तस्योपहतिः=अभिभवो ध्यानमित्यर्थः ॥ ३० ॥

ननु कुतो ध्यानस्य सिद्धिः ? तत्राह—

"वृत्तिनिरोधात्तत्सिद्धिः" ॥ ३१ ॥

वृत्तिनिरोधात्=प्रमाणविपर्य्ययविकल्पनिद्रास्मृतयः पञ्च वृत्तय, स्तासां

विषयानुरागहेतूनां निरोधात्तत्सिद्धिः=तस्य ध्यानस्य सिद्धिः=निष्पत्तिरित्यर्थः ॥ ३१ ॥

**ननु** वृत्तिनिरोधस्य सिद्धिः कुतः ? तत्राह—

**"धारणासनस्वकर्मणा तत्सिद्धिः" ॥ ३२ ॥**

धारणासनस्वकर्मणा=वक्ष्यमाणलक्षणेन धारणाध्यानस्वकर्मणा तत्सिद्धिः=तस्य वृत्तिनिरोधस्य सिद्धिः=निष्पत्तिरित्यर्थः ॥ ३२ ॥

**धारणां** लक्षयति ।

**"निरोधश्छर्दिविधारणाभ्याम्" ॥ ३३ ॥**

छर्दिविधारणाभ्यां=रेचनं छर्दिस्तेन पूरणस्यापि संग्रहः।स्तम्भनं विधारणं, ताभ्यां यः प्राणस्य निरोधः सा धारणेत्यर्थः ॥ ३३ ॥

**आसनं** लक्षयति ।

**"स्थिरसुखमासनम्" ॥ ३४ ॥**

यद्यपि स्वस्तिकादिभेदेनासनं बहुविधं,तथापि यत् स्थिरसुखं=स्थिरं सत्सुखप्रदं, तदेवासनमित्यर्थः ॥ ३४ ॥

**स्वकर्म** लक्षयति ।

**"स्वकर्म स्वाश्रमविहितकर्मानुष्ठानम्" ॥ ३५ ॥**

स्वाश्रमविहितकर्मानुष्ठानम्=आश्रमाश्चत्वारस्तत्रस्वस्वाश्रमस्य वेदेन विहितानां कर्मणां यथाशास्त्रमनुष्ठानं स्वकर्मेत्यर्थः ॥ ३५ ॥

**वृत्ति**निरोधस्योपायान्तरमाह—

**" वैराग्यादभ्यासाच्च " ॥ ३६ ॥**

समुच्चये चः । दृष्टानुश्रविकविषयवैतृष्ण्यं वैराग्यम् । स्थितौ यत्नोऽभ्यासः, ताभ्यां समुच्चिताभ्यां वृत्तिनिरोध इत्यर्थः ॥ ३६ ॥

' **बन्धो विपर्य्ययात्** '[1] इत्युक्तं, तत्र विपर्य्ययभेदानाह—

**" विपर्य्ययभेदाः पञ्च " ॥ ३७ ॥**

---

१ सां०अ० ३ सू० २४ ।

अविद्यास्मितारागद्वेषाभिनिवेशाः पञ्च विपर्ययभेदाः=विपर्य्ययस्य=विवेकज्ञानविपरीतस्याविवेकस्य भेदा इत्यर्थः ॥ ३७ ॥

विपर्य्ययस्य भेदानुक्त्वा तत्कारणभूतामशक्तिमाह—

**" अशक्तिरष्टाविंशतिधा " ॥ ३८ ॥**

अष्टाविंशतिधा=एकादशेन्द्रियाणि, तेषां वैकल्यादेकादशधा, सप्तदश तुष्टिसिद्धी, तयोर्विपर्ययात् सप्तदशधेति मिलित्वाऽष्टाविंशतिधाऽशक्तिः=बुद्धेरशक्तिरित्यर्थः ॥ २८ ॥

ययोर्विपर्य्ययात्सप्तदशधा बुद्धेरशक्तिस्ते तुष्टिसिद्धी सूत्रद्वयेनाह—

**" तुष्टिर्नवधा " ॥ ३९ ॥**

स्पष्टम् । नवधात्वं वक्ष्यति ॥ ३९ ॥

**" सिद्धिरष्टधा " ॥ ४० ॥**

स्पष्टम् । अष्टधात्वं वक्ष्यति ॥ ४० ॥

'[1]**विपर्ययभेदाः पञ्च**' इत्युक्तं, तत्रावान्तरभेदान् निरूपयति ।

**" अवान्तरभेदाः पूर्ववत् " ॥ ४१ ॥**

पूर्ववत्=यथा पूर्वं विपर्ययस्य पञ्च भेदा उक्तास्तथाऽवान्तरभेदाः=विषयभेदादवान्तरभेदा अपि द्वाषष्टिरवगन्तव्या इत्यर्थः ।

तत्राव्यक्तमहदहंकारतन्मात्रेष्वष्टास्वनात्मस्वात्मख्यातिरविद्या तमोऽष्टधा ८ अणिमाद्यष्टविधैश्वर्य्येष्वणुरस्मि, महानस्मीति तादात्म्याभिमानोऽस्मितामोहोऽष्टधा ८ दिव्यादिव्यभेदेन दशविधेषु शब्दादिविषयेषु लोभो रागो महामोहो दशधा १० अस्मिताया अष्टौ ये विषया, ये च रागस्य दशविषयास्तद्विघातकेषु क्रोधो द्वेषस्तामिस्रोऽष्टादशधा १८ तेषामेवाष्टादशानां विनाशस्यानुसन्धानाज्जायमानस्त्रासोऽभिनिवेशोऽन्धतामिस्रोऽष्टादशधा १८ इति द्वाषष्टिभेदो विपर्यय इति भावः ॥ ४२ ॥

अशक्तेरष्टाविंशतिधात्वमवधारयति ।

---

१ सां० अ०३ सू० ३७ ।

"एवमितरस्याः" ॥ ४२ ॥

एवं=विपर्ययवदितरस्याः=अशक्तेरप्यष्टाविंशतिरवान्तरभेदा, अवगन्तव्या इत्यर्थः ।

ते च भेदा अष्टात्रिंशत्तमे सूत्रे उक्ता इति ध्येयम् ॥ ४२ ॥

तुष्टेर्नवधात्वमाह—

"आध्यात्मिकादिभेदान्नवधा तुष्टिः" ॥ ४३ ॥

आध्यात्मिकादिभेदात्=आत्मानमधिकृत्य प्रवर्तन्ते इत्याध्यात्मिक्यः प्रकृत्युपादानकालभाग्याख्याश्चतस्रस्तुष्टय आदौ यस्य पारसुपारपारापारानुत्तमाम्भोत्तमाम्भाख्यपञ्चविधतुष्टिभेदस्य, स तथा, तस्मात् नवधा=नवप्रकारा तुष्टिरित्यर्थः ।

विवेकसाक्षात्कारपर्यन्तः सर्वोऽपि परिणामः प्रकृतेरेव, तञ्च प्रकृतिरेव करोति, अहन्तु कूटस्थः पूर्ण इत्यात्मभावनाद्यः परितोषः सा प्रकृत्याख्या तुष्टिः। इयञ्चाम्भ इत्युच्यते। ततश्च प्रव्रज्योपादानेन या तुष्टिः सोपादानाख्या सलिलमित्युच्यते । तदनु प्रव्रज्यायां बहुकालं योगानुष्ठानेन या तुष्टिः सा कालाख्या ओघ इत्युच्यते । पश्चात् प्रसंख्यानापरनामधेयविवेकख्यातिपरप्रकाष्ठारूपे धर्ममेघसमाधौ सति या तुष्टिः सा भाग्याख्या वृष्टिरित्युच्यते। ता एताश्चतस्र आध्यात्मिक्यः । यास्तु शब्दादिषु पञ्चसु बाह्यविषयेष्वर्जनरक्षणक्षयभोगहिंसादोषनिमित्तकोपरमाज्जायन्ते ता यथाक्रमं पारसुपारपारापारानुत्तमाम्भोत्तमाम्भा इत्याख्यायन्ते । ताश्चैता बाह्यविषयत्वाद् बाह्याः पञ्च तुष्टय इति नवधा तुष्टिरिति भावः ॥ ४३ ॥

सिद्धेरष्टधात्वमाह—

"ऊहादिभिः सिद्धिः" ॥ ४४ ॥

आदिपदेन 'शब्दाध्ययनसुहृत्प्राप्तिदानदुःखविघातानां संग्रहः।तत्र विहन्यमानस्य दुःखस्य त्रयत्वात्तद्विघाता अपि त्रय इतीमा मुख्यास्तिस्रः सि-

द्धयः तदुपायभूतास्त्वितराः पञ्च गौण्य इत्येवमूहादिभिर्भेदैरष्टधा सिद्धिरित्यर्थः ।

उपदेशादिकं विनैव प्राग्भवीयाभ्यासवशात् तत्वस्य स्वयमूहनमूहा १ अन्यदीयपाठमाकर्ण्य स्वयं वा शास्त्रमाकलय्य यज्ज्ञानं जायते तच्छब्दः २ शिष्याचार्य्यभावेन शास्त्राध्ययनाज्जायमानं ज्ञानमध्ययनं ३ स्वयमुपदेशार्थं गृहागतात्परमकारुणिकाज्ज्ञानलाभः सुहृत्प्राप्तिः ४ धनादिदानेन परितोषिताज्ज्ञानलाभो दानमित्युपायभूताः पञ्च सिद्धयः । आध्यात्मिकादिदुःखत्रयविघातात्मिकाः फलभूतास्तिस्रः सिद्धय इत्यष्टौ ता इति भावः ॥४४॥

ननूहादिपञ्चकं सिद्धिहेतुत्वात्सिद्धिरित्युक्तमयुक्तम् । तप आदेरपि तद्धेतुत्वात, तत्राह—

**"नेतरादितरहानेन विना" ॥ ४५ ॥**

सिद्धिरिति पूर्वसूत्रादनुवर्तते । नेतरात्सिद्धिः=ऊहादिपञ्चकेतरात्तप आदेर्जायमाना सिद्धिर्न सिद्धिः, किन्तु सिद्ध्याभासः।कुतः ? इतरहानेन विना=विपर्ययस्य हानमितरहानं, तेन विना=विपर्ययविनाशमन्तरैव जायमानत्वादित्यर्थः ॥ ४५ ॥

एवमन्तःसृष्टिभेदानुक्त्वा बाह्यसृष्टिभेदानाह—

**"दैवादिप्रभेदा" ॥ ४६ ॥**

सृष्टिरित्यग्रिमसूत्रादनुकृष्यते । मानुष्यभेदस्य तैर्य्यग्यौनभेदस्य चादिपदेन परिग्रहः । प्रभेदोऽवान्तरभेदः । दैवादिः प्रभेदो यस्याः सा तथा भौतिकी सृष्टिरित्यर्थः ।

तत्र दैवी सृष्टिरष्टविधा । तैर्य्यग्योनिः पञ्चविधा । मानुषी चैकविधेति भाष्यम् ॥ ४६ ॥

ननु किमर्थमेषा सर्वा सृष्टिः किमवधिका च ? तत्राह—

**"आब्रह्मस्तम्बपर्य्यन्तं तत्कृते सृष्टिराविवेकात्" ॥४७॥**

आब्रह्मस्तम्बपर्य्यन्तम्=आदिमो ब्राह्मणवर्णो ब्रह्मा, स्तम्बः स्थावरः, ब्राह्मणादि स्थावरान्ता सृष्टिः=यावती भौतिकी सृष्टिः, सा सर्वाऽभौतिकसृष्टिवत् तत्कृते=पुरुषकृते वेदितव्या । साऽप्याविवेकात्=यावद्विवेकज्ञानं न जायते तावदेवेत्यर्थः ॥ ४७ ॥

तत्रविस्पष्टप्रतिपत्तये स्वयं तद्विभागमाह—

"ऊर्ध्वं सत्त्वविशाला" ॥ ४८ ॥

सृष्टिरित्यनुवर्तते।सत्त्वविशाला=सत्त्वं विशालं=बृहद् रजस्तमसी च लघुनी यस्यां सृष्टौ, सा तथा=सत्त्वगुणबहुला, सृष्टिः=या सृष्टिः, सोर्ध्वम्=ऊर्ध्वगतिका दैवीत्यर्थः ॥ ४८ ॥

"तमोविशाला मूलतः"॥ ४९ ॥

सृष्टिरित्यनुवर्तते । तमोविशाला=तमोगुणबहुला या सृष्टिः सा मूलतः=मूलगा=शिफगेति यावत् । पश्वादिस्थावरान्ता तैर्य्यग्योनीत्यर्थः ॥४९॥

मध्येरजोविशाला" ॥ ५० ॥

सृष्टिरित्यनुवर्तते । रजोविशाला=रजोगुणबहुला या सृष्टिः सा मध्ये=नोर्ध्वं न मूलतः,किन्तूभयोर्मध्ये वर्तमाना मध्यगतिका मानुषीत्यर्थः॥५०॥

ननु कस्मादीदृग्विचित्रसृष्ट्यै प्रकृतेश्चेष्टा ? तत्राह—

"कर्मवैचित्र्यात्प्रधानचेष्टा गर्भदासवत्" ॥ ५१ ॥

कर्मवैचित्र्यात्=पुरुषादृष्टवैलक्षण्यात् प्रधानचेष्टा=विचित्रसृष्ट्यैप्रकृतेर्व्यापृतिः । गर्भदासवत्=यथा दास्यवासनावैचित्र्याद्गर्भदासस्य = गर्भादारभ्य सेवकस्य पुरुषसेवायै विचित्रा चेष्टेत्यर्थः ॥ ५१ ॥

नन्वेवन्तर्हि पुरुषस्यास्य कर्मवैचित्र्यादूर्ध्वगतिलाभेनैव कृतार्थत्वमस्तु किं मोक्षेण ? तत्राह—

"आवृत्तिस्तत्राप्युत्तरोत्तरयोनियोगाद्धेयः" ॥ ५२॥

तत्रापि=ऊर्ध्वगतिलाभेऽप्युत्तरोत्तरयोनियोगात्=उत्तरस्मादुत्तरस्य योनेः

सम्बन्धादावृत्तिः=पुनरावृत्तिरस्ति । तस्मादुत्तरोत्तरगतिलाभोऽपि हेयः=मुमुक्षुभिस्त्याज्य इत्यर्थः ॥ ५२ ॥

किञ्च ।

**समानं जरामरणादिजं दुःखम्" ॥ ५३ ॥**

हेय इत्यनुवर्तते । यत इतिशेषणीयम्, आदिना शोकमोहादयो ग्राह्याः। यस्माज्जरामरणादिजं दुःखं समानम्=ऊर्ध्वाधोमध्यगानां ब्रह्मादिस्तम्बपर्य्यन्तानां सर्वेषां जीवानामविशिष्टम् । तस्मादप्युत्तरोत्तरगतिलाभो मुमुक्षुभिर्हेय इत्यर्थः ॥ ५२ ॥

ननवस्तु तर्हि कारणलयादेव कृतार्थत्वं, तत्राह—

**" न कारणलयात्कृतकृत्यता मग्नवदुत्थानात " ॥५४॥**

कारणलयात्=कारणे=प्रकृतौ लयादपि न कृतकृत्यता=कृतार्थत्वमस्य पुंसः संभवति । कुतः ? मग्नवदुत्थानात्=जलनिमग्नपुरुषोत्थानवत्पुनरुत्थान संभवादित्यर्थः ।

यस्य विवेको न जातः, केवलं वैराग्यं वर्तते, तस्यात्मबुद्ध्योपास्यमानायां प्रकृतौ लय इति द्रष्टव्यम ॥ ५४ ॥

नन्वखिलकारणं प्रकृतिः कस्मादात्मलीनं पुमांसं पुनरुत्थानेन योजयति ? तत्राह—

**"अकार्य्यत्वेपि तद्योगः पारवश्यात" ॥ ५५ ॥**

अकार्यत्वेपि=निखिलकारणत्वेऽपि प्रकृतेः पारवश्यात्=पर ईश्वरस्तदधीनत्वाद्यथानियमं पुरुषस्य तद्योगः=तया प्रकृत्या पुनरुत्थानयोगः संभवतीत्यर्थः ॥ ५५ ॥

ननु कुलवधूरिव जगज्जननी प्रकृतिः कथं परस्य वशवर्तिनीस्यात ? तत्राह—

**"सहि सर्ववित सर्वकर्ता" ॥ ५६ ॥**

हि=यस्मात् स=परः परमेश्वरः । सर्ववित्=सर्वज्ञः । सर्वकर्ता=सर्वस्य जगतः पितेत्यर्थः ।

**तेन** प्रकृतेस्तद्वशवर्तिनीत्वे न कश्चिद्दोष इति भावः ॥ ५६ ॥

**नन्वनुमानतः** केवलं परसामान्यस्य सिद्धिर्ज्ञायते, नत्वीदृशेश्वरस्य, तत्राह—

**"ईदृशेश्वरसिद्धिः सिद्धा" ॥ ५७ ॥**

ईदृशेश्वरसिद्धिः=ईदृशस्य=प्रकृतिनियन्तुरीश्वरस्य=सर्वज्ञेश्वरस्य सिद्धिः= ज्ञप्तिःसिद्धा=वेदमात्रजन्येत्यर्थः ।

**तथा** च तत्रभवान् वेदः । यजुः श्वेताश्व० अ० ६ मं० १६ ।

**"स विश्वकृद्विश्वविदात्मयोनिर्ज्ञः कालकालो गुणी सर्वविद्यः । प्रधानक्षेत्रज्ञपतिर्गुणेशः संसारमोक्षस्थितिबन्धहेतुः" ॥ १६ ॥ इति ॥ ५७ ॥**

**नन्वस्तु** परवशवर्तिनी प्रकृतिस्तथापि जीवसृष्टिरिव तत्सृष्टिरात्मकृते किन्न भवेत् ? तत्राह—

**"प्रधानसृष्टिः परार्थं स्वतोऽप्यभोक्तृत्वा-दुष्ट्रकुङ्कुमवहनवत्" ॥ ५८ ॥**

एवार्थोऽपिः। परार्थमित्यस्याग्रे योजयितव्यः।प्रधानसृष्टिः परार्थमेव भवितुमर्हति न स्वार्थम् । कुतः? स्वतोऽभोक्तृत्वात्=स्वयं तस्य भोक्तृत्वाभावात् । तत्र निदर्शनमुष्ट्रकुंकुमवहनवत्=यथोष्ट्रः परार्थमेव कुङ्कमं वहति न स्वार्थमित्यर्थः ॥ ५८ ॥

**ननु** तथाप्यचेतना प्रकृतिः कथं परवशवर्तिनी सत्यपि परार्थं चेष्टेत? तत्राह—

**"अचेतनत्वेऽपि क्षीरवच्चेष्टितं प्रधानस्य" ॥ ५९ ॥**

प्रधानस्य=प्रकृतेरचेतनत्वेपि=चेतनत्वाभावेऽपि चेष्टितं=पुरुषकृतेजगत्सर्जनलक्षणो व्यापारविशेष उपपद्यते । क्षीरवत्=यथा परवशवर्तिनः क्षीरस्याचेतनत्वेऽपि वत्सार्थं चेष्टितमित्यर्थः ॥ ५९ ॥

निदर्शनान्तरमाह—

"कर्म वद्दृष्टेर्वा कालादेः" ॥ ६० ॥

आदिपदेनादृष्टस्य संग्रहः । प्रधानस्येत्यनुवर्तते । कालादेः कर्मवद्वा=यथा वा कालादेरचेतनत्वेऽपि परार्थं हेमन्तशिशरादिलक्षणं कर्म=चेष्टितम्, तथा प्रधानस्यापि चेष्टितम् । कुतः ? दृष्टेः=दर्शनादित्यर्थः ।

यथा दर्शनश्चान्यत्र कल्पनमिति भावः ॥ ६० ॥

नन्वचेतनायाः प्रकृतेर्ममेदंकर्तव्यमित्यनुसन्धानाभावात्कथं परार्थं चेष्टितं स्यात् ? तत्राह—

"स्वभावाच्चेष्टितमनभिसन्धानाद्भृत्यवत्" ॥ ६१ ॥

प्रधानस्येत्यनुवर्तते । स्वभावात्=निसर्गतः प्रधानस्य चेष्टितं=परार्थं चेष्टनमनभिसन्धानात्=अभिसन्धानमत्रानुसन्धानम्, न 'ममेदं कर्तव्यम्' इत्यनुसन्धानात् भृत्यवत्=यथा भृत्यस्य=गर्भदासस्य स्वभावादेव स्वामिकृते चेष्टितं नाभिसन्धानादित्यर्थः ॥ ६१ ॥

समाधानान्तरमाह—

"कर्माकृष्टेर्वानादितः" ॥ ६२ ॥

प्रधानस्य चेष्टितमिति पदद्वयमनुवर्तते । अनादितः कर्माकृष्टेर्वा=संसारस्यानादित्वादनादीनि कर्माणि, तेषामनादित्वात्तैराकृष्टिः=आकर्षणमप्यनादि । तस्मादनादिभूतात्कर्मभिराकर्षणाद्वा प्रधानस्य चेष्टितमित्यर्थः ॥ ६२ ॥

ननु स्वभावाद्वा कर्मभिराकर्षणाद्वा प्रधानस्य चेच्चेष्टितं, सृष्टिनिवृत्तिर्न स्यात्, तत्राह—

"विविक्तबोधात्सृष्टिनिवृत्तिः प्रधानस्य सूदवत्पाके" ॥ ६३ ॥

विविक्तबोधात्=प्रकृतितत्कार्येभ्यो विविक्तस्य पुरुषस्य बोधो विविक्तबोधः=सत्त्वपुरुषान्यताप्रत्ययस्तस्मात्=तदुपजननात् प्रधानस्य=प्रकृतेःसृष्टिनिवृत्तिः=सर्जनलक्षणव्यापारस्य निवृत्तिर्भवति । सूदवत्पाके=यथा पाके निष्पन्ने सूदस्य=पाचकस्य पाकानुकूलव्यापारस्य निवृत्तिरित्यर्थः । चरिताधिकारत्वादिति भावः ॥ ६३ ॥

ननु प्रकृतेरेकत्वादुजातविविक्तबोधं प्रतीव तदितरं प्रत्यपि तस्याः सृष्टिनिवृत्तिः स्यात्, तत्राह—

" इतर इतरवत् तद्दोषात् " ॥ ६४ ॥

तद्दोषात्=तच्छब्दः प्रधानमाह । विविक्तबोधानुपजननलक्षणो दोषस्तद्दोषस्तस्मादितरः=विविक्तबोधरहितः पुमानितरवत्=अबुद्धवदवातिष्ठते । तेन तं प्रति न प्रधानस्य सृष्टिनिवृत्तिरित्यर्थः ॥ ६४ ॥

ननु विविक्तबोधाच्चेत्सृष्टिनिवृत्तिस्तर्हि सैवापवर्गोऽस्तु कृतं तदन्येन तेन, तत्राह—

" द्वयोरेकतरस्य वौदासीन्यमपवर्गः " ॥ ६५ ॥

विविक्तबोधादित्यनुवर्तते । विविक्तबोधाद्द्वयोः=प्रकृतिपुरुषयोरुभयोरेकतरस्य वा=द्वयोरेकस्य वा पुरुषस्य यदौदासीन्यं=एकाकिता=मिथोऽननुषङ्ग इति यावत्, सोऽपवर्गः=मोक्ष इत्यर्थः ॥ ६५ ॥

नन्वेवमेकस्मिन्नौदासीन्यंभजतःप्रधानस्यान्यस्मिन्नप्यौदासीन्यंस्यात्, तत्राह—

" अन्यसृष्ट्युपरागेऽपि न विरज्यते, प्रबुद्धरज्जुतत्त्वस्येवोरगः " ॥ ६६ ॥

अपि=एकमुपजातविविक्तबोधं प्रत्यौदासीन्यं भजदपि प्रधानमन्यसृष्ट्यु-

परागे=अन्यम्=अनुपजातविविक्तबोधं प्रति सृष्ट्युपरागे=सृष्ट्युपजनने न विरज्यते=नौदासीन्यं भजते । प्रबुद्धरज्जुतत्त्वस्येवोरगः=यथोरगः=रज्जुसर्पः प्रबुद्धरज्जुतत्त्वस्य=ज्ञातरज्जुस्वरूपस्य पुरुषस्यार्थमुदासीनोऽपि भयकम्पादिजनने नाप्रबुद्धरज्जुतत्त्वस्य कृते विरज्यते इत्यर्थः ॥ ६६ ॥

अन्यौदासीन्ये हेत्वन्तरमाह—

" कर्मनिमित्तयोगाच्च " ॥ ६७ ॥

अन्यसृष्ट्युपरागे न विरज्यते इत्यनुवर्तते । सृष्टौ कर्मलक्षणनिमित्तस्य सद्भावाच्चान्यसृष्ट्युपरागे न विरज्यते प्रकृतिरित्यर्थः ॥ ६७ ॥

ननु पुरुषान् प्रति प्रकृत्युपकारे किं तन्निमित्तं, येन प्रत्युपकारनिरपेक्षापि प्रकृतिः पुनःपुनः प्रवर्तते ? तत्राह—

" नैरपेक्ष्येऽपि प्रकृत्युपकारेऽविवेको निमित्तम् "॥६८॥

नैरपेक्ष्येऽपि=प्रत्युपकारापेक्षाभावेऽपि पुरुषान् प्रति प्रकृत्युपकारे=भोगापवर्गलक्षणे तस्मिन्नविवेको निमित्तमित्यर्थः ॥ ६८ ॥

ननु तथापि प्रवृत्तिस्वभावायाः प्रकृते र्विवेके सत्यपि निवृत्तिः कथमुपजायेत ? तत्राह—

"नर्तकीवत्प्रवृत्तस्यापि निवृत्तिश्चारितार्थ्यात्" ॥६९॥

प्रवृत्तस्यापि=स्वभावतः प्रवृत्तिमतोऽपि प्रधानस्य निवृत्तिः=निवर्तनं जायते । कुतः ? चारितार्थ्यात्=कृतकार्य्यत्वात् । नर्तकीवत्=यथा पारिषदान् प्रति नृत्यप्रदर्शनाय प्रवृत्ताया नर्तक्याश्चारितार्थ्यान्निवृत्तिरित्यर्थः ॥६९॥

किञ्च ।

"दोषबोधेऽपि नोपसर्पणं प्रधानस्य कुलवधूवत्" ७०॥

समाधानान्तरसूचकोऽपिः।दोषबोधे=परिणामित्वदुःखात्मकत्वादयःप्रकृतिदोषास्तेषां बोधे=ज्ञाने जाते नोपसर्पणं=न पुनर्ज्ञातदोषं प्रति प्रवर्तनं प्रधानस्य संभवति । कुलवधूवत्=यथा परेण दोषस्य बोधे लज्जितायाः कुलीनस्त्रियाः पुनः परं प्रत्यनुपसर्पणमित्यर्थः ॥ ७० ॥

ननु प्रकृत्युपसर्पणानुपसर्पणाभ्याञ्चेत्पुरुषस्य बन्धमोक्षौ । तर्हि तस्य परिणामापत्तिस्तत्राह—

**"नैकान्ततो बन्धमोक्षौ पुरुषस्याविवेकादृते" ॥७१॥**

अविवेकादृते=अन्तरेणाविवेकमेकान्ततः=परमार्थतः पुरुषस्य=जीवस्य बन्धमोक्षौ=बन्धो मोक्षश्च न=नस्त इत्यर्थः ।

अविवेकादेव तौ पुरुषस्येति भावः ॥ ७१ ॥

ननु पुरुषस्याविवेकादेव चेद् बन्धमोक्षौ न परमार्थतस्तर्हि परमार्थतः कस्य ? तत्राह—

**"प्रकृतेराञ्जस्यात्ससङ्गत्वात्पशुवत्" ॥ ७२ ॥**

बन्धमोक्षौ पूर्वसूत्रादनुवर्तेते । प्रकृतेराञ्जस्यात्=परमार्थतो बन्धमोक्षौ । कुतः ? ससङ्गत्वात्=बन्धमोक्षहेतुधर्माधर्मादिभिर्गुणैः संबन्धः सङ्गस्तद्वत्त्वात् । पशुवत्=यथा गुणसंबन्धवतः पशोः परमार्थतो बन्धो मोक्षश्चेत्यर्थः ॥ ७२ ॥

ननु कतिभिर्गुणैः प्रकृतिरात्मानं बध्नाति मोचयति च ? तत्राह—

**"रूपैः सप्तभिरात्मानं बध्नाति प्रधानं कोशकारवद्विमोचयत्येकरूपेण ॥ ७३ ॥**

कोशकारवत्=यथा कोशकारः कीटविशेषः स्वगुणैरात्मानं बध्नाति तथा प्रधानं=प्रकृतिः सप्तभिः=धर्मवैराग्यैश्वर्य्याधर्माज्ञानावैराग्यानैश्वर्य्यैः रूपैः=गुणैरात्मानं=स्वं बध्नाति । विमोचयति=मोचयति चैकरूपेण=एकेन विवेकज्ञानेन गुणेनेत्यर्थः ।

तत्राज्ञानमविवेक इति ध्येयम् ॥ ७३ ॥

नन्वेवमविवेकाद्बन्ध इति पूर्वोक्ता पञ्चमी नोपपद्येत, लोके गुणानां निमित्तकारणत्वस्यैव दृष्टेः, तत्राह—

**"निमित्तत्वमविवेकस्येति न दृष्टहानिः" ॥ ७४ ॥**

अविवेकस्य=पूर्वोक्तलक्षणस्याविवेकस्य पुरुषेषु बन्धादिकं प्रति निमित्तत्वं=निमित्तकारणत्वमवसेयमिति=अतो न दृष्टहानिः=लोके दृष्टस्य हानिर्नेत्यर्थः ।

निमित्तेऽपि पञ्चमी स्मरणादिति भावः ॥ ७४ ॥

ननु भवत्वविवेकात्पुरुषस्य बन्धादिकं, तथापि तन्निवर्तकस्य विवेकस्य सिद्धिः कथं स्यात् ? तत्राह--

**"तत्त्वाभ्यासान्नेति नेतीति त्यागाद् विवेकसिद्धिः" ॥ ७५ ॥**

नेति नेतीति त्यागात्=इदमर्थकमन्नेति पदम् । प्रकृत्यन्तानां चतुर्विंशतितत्त्वानां नेदमात्मा नेदमात्मेति=एवं प्रकारेण परित्यागात् तत्त्वाभ्यासात्=परिशिष्यमाणस्यात्मतत्त्वस्य पुनः पुनश्चिन्तनलक्षणादभ्यासादादरनैरन्तर्यदीर्घकालासेविताद्विवेकासिद्धिः=निरस्तसमस्तसंशयविपर्ययस्यात्मसाक्षात्कारलक्षणस्य विवेकस्य सिद्धिः=निष्पत्तिर्भवतीत्यर्थः ॥ ७५ ॥

ननु तत्वाभ्यासाच्चेद् विवेकस्य निष्पत्तिस्तर्ह्येकस्मिन् जन्मन्येव सर्वेषामभ्यासं कुर्वतां तन्निष्पत्तिः किंन स्यात् ? तत्राह—

**"अधिकारिप्रभेदान्न नियमः" ॥ ७६ ॥**

अधिकारिभेदात=उत्तममध्यमाधमभेदेनाधिकारिणां भेदादभ्यासे क्रियमाणेऽपि न नियमः=नैकस्मिन् जन्मनि सर्वेषां विवेकनिष्पत्तिनियम॥इत्यर्थः॥

किन्तूत्तमानामेवेति भावः ॥ ७६ ॥

ननु विवेकनिष्पत्त्याऽविवेकनिवृत्तौ तदविनाभूतनिःशेषदुःखनिवृत्तेर्विवेकिनः पश्चादुपभोगो न स्यात्, तत्राह—

**"बाधितानुवृत्त्या मध्यविवेकतोऽप्युपभोगः" ॥ ७७ ॥**

उत्तमविवेकतो बाधितानामनुवृत्तिर्न भवतीति मध्यपदमुपात्तम् । अपिशब्दो मुक्तिसमुच्चायको भिन्नक्रमः । मध्यविवेकतः=मन्दमध्योत्तमभेदाद्

विवेकोऽपि त्रिविधः । तत्र मध्यावस्थाद् विवेकाद् बाधितानुवृत्त्या=बाधितानां दुःखादीना मारब्धबलेनानुवृत्त्योपभोगोऽपि=भोगोऽपि संभवतीत्यर्थः ॥ ७७ ॥

ननु विवेके सत्यपि चेदुपभोगस्तदा विवेकेन किं कृतं ? तत्राह—

**"जीवन्मुक्तश्च" ॥ ७८ ॥**

अप्यर्थश्चः । बाधितानुवृत्त्योपभोगं कुर्वाणोऽपिविवेकमाहात्म्याज्जीवन्मुक्तः=जीवन् सन् मुक्त इव भवतीत्यर्थः ॥ ७८ ॥

ननूपभोगं कुर्वाणोऽपि जीवन्मुक्त इति न सिध्यति, तत्राह—

**"उपदेश्योपदेष्टृत्वात तत्सिद्धिः" ॥ ७९ ॥**

उपदेश्योपदेष्टृत्वात्=लोकवेदयोरुपदेश्योपदेष्टृभावस्य दर्शनात् तत्सिद्धिः=तस्य जीवन्मुक्तस्य सिद्धिरित्यर्थः ।

मन्दविवेकस्योपदेश्यत्वादुत्तमविवेकस्य चोपदेष्टृत्वासंभवादर्थादुपदेष्टा मध्यविवेको जीवन्मुक्त इति भावः ॥ ७९ ॥

नन्वनुमानमेतन्न श्रुतिस्तत्राह—

**"श्रुतिश्च" ॥ ८० ॥**

**'तस्य तावदेव चिरम्'**[1] इति श्रुतिश्च जीवन्मुक्तस्य सद्भावे प्रमाणमित्यर्थः ॥ ८० ॥

विपक्षे दण्डमाह—

**" इतरथाऽन्धपरम्परा " ॥ ८१ ॥**

इतरथा=जीवन्मुक्तानङ्गीकारेऽन्धपरम्परा=उपदेष्टुरभावादन्धपरंपरापत्तिरित्यर्थः ।

सम्यग्विवेकचक्षूरहितत्वादन्धोगुरुस्तच्छिष्योऽपि तथात्वात्तथा, एवमग्रेऽपीत्यन्धपरम्परेति भावः ॥ ८१ ॥

---

१ छां० प्र० ६ खं० १४ + २ ।

नन विवेकसाक्षात्कारेण निवृत्तायां प्रकृतौ कथं पुनर्जीवन्मुक्तस्तिष्ठेत ? तत्राह—

" चक्रभ्रमणवद्धृतशरीरः " ॥ ८२ ॥

चक्रभ्रमणवत्=यथा दण्डेन भ्राम्यमाणं चक्रं निवृत्तेऽपि दण्डे भ्रमणवदवतिष्ठते, तथायं धृतशरीरः=निवृत्तायां प्रकृतौ प्रारब्धकर्मणा धृतशरीरस्तिष्ठतीत्यर्थः ॥ ८२ ॥

ननु तथापि जीवन्मुक्तस्य भोगादिवासनाक्षये शरीरधारणं न सिध्यति, तत्राह—

" संस्कारलेशतस्तत्सिद्धिः " ॥ ८३ ॥

शरीरधारणहेतवो ये विषयभोगादिसंस्कारास्तेषां लेशः=आभासस्तस्मात्=विषयभोगादिवासनाभासात्तत्सिद्धिः=तस्य शरीरधारणस्य सिद्धिरित्यर्थः ॥ ८३ ॥

सम्प्रति भोगेन प्रारब्धकर्मक्षये परममुक्तिमुपसंहरन्नाह—

" विवेकान्निःशेषदुःखनिवृत्तौ कृतकृत्यो नेतरान्नेतरात् " ॥ ८४ ॥

अध्यायपरिसमाप्तिवचना वीप्सा । विवेकात्=आत्मसाक्षात्कारलक्षणात्सत्त्वपुरुषान्यताप्रत्ययान्निःशेषदुःखनिवृत्तौ=बाधिताबाधितसाधारण्येनाखिलदुःखनिवृत्तौ सत्यां पुरुषः कृतकृत्यः=कृतकार्य्यः=मुक्तो भवति नेतरात्=नेतरस्मात्केवलात्कर्मण इत्यर्थः ॥ ८४ ॥

स्थूलं लिंगं तथा सृष्टिर्नाना वैराग्यसाधनम् ।
विवेकोऽथ द्वयी मुक्तिः सम्यगस्मिन्निरूपितम् ॥ १ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्य्योदासीनवर्य्यात्मारामभगवत्पादशिष्यहरिप्रसादकृतायां सांख्यसूत्रवृत्तौ वैराग्याध्यायस्तृतीयः ॥३॥

# अथ चतुर्थोऽध्यायः ।

**ननु** कस्मात्स विवेको जायते येन निःशेषदुःखनिवृत्तिः ? तत्राह—

**"राजपुत्रवत् तत्त्वोपदेशात्" ॥ १ ॥**

विवेक इति विपरिणम्यानुवर्तते । तत्त्वोपदेशात्=स विवेको गुरुभिरात्मतत्त्वोपदेशाज्जायते । राजपुत्रवत्=यथा वसिष्ठेनात्मतत्त्वोपदेशाद्राजपुत्रस्य रामस्य विवेको जात इत्यर्थः ॥ १ ॥

**ननु** यदर्थं गुरूणामुपदेशः किं तस्यैव विवेक उत्पद्यते, उत तदन्यस्यापि समीपस्थस्य ? तत्राह—

**"पिशाचवदन्यार्थोपदेशेऽपि" ॥ २ ॥**

विवेक इति पूर्ववदनुवर्तते । अन्यार्थोपदेशे=अन्यस्मै शिष्याय गुरुभिरात्मतत्त्वोपदेशे क्रियमाणेऽपि=तत्समीपस्थस्यान्यस्यापि यथाविधिश्रवणाद् विवेको जायते । पिशाचवत्=यथा स्वप्रियायै पार्वत्यै शिवेनात्मतत्त्वोपदेशे क्रियमाणे तत्पार्श्ववर्तिनः पिशाचनाम्नो भृत्यस्य विवेकोऽजायतेत्यर्थः ॥ २ ॥

**ननु** सकृत् तत्त्वोपदेशाच्चेद् विवेको नोपजायेत । तदा किं कर्तव्यं ? तत्राह—

**"आवृत्तिरसकृदुपदेशात्" ॥ ३ ॥**

आवृत्तिः=सकृदुपदेशाद् विवेकेऽजायमाने तदाऽऽवृत्तिः कर्तव्या । कुतः ? असकृदुपदेशात्=छान्दोग्योपनिषदि षष्ठप्रपाठके श्वेतकेतुं पुत्रं प्रति पितुरारुणेरसकृदुपदेशदर्शनादित्यर्थः ॥ ३ ॥

**ननु** पुत्रं प्रति पितुरसकृदुपदेशः संभवति । न तु शिष्यं प्रति गुरोः । तत्राह—

**"पितापुत्रवदुभयोर्दृष्टत्वात्" ॥ ४ ॥**

पितापुत्रवत्=पितापुत्रयोरिवोभयोः=गुरुशिष्ययोरुपदेश्योपदेष्टृभावो भवति। न तद्विलक्षणः।कुतः? दृष्टत्वात्=लोके प्रायेण तथा दृष्टत्वादित्यर्थः॥४॥

ननु एवमुत्पन्नविवेकप्रत्ययस्य तद्दार्ढ्याय किं कर्तव्यमित्याकांक्षायां पूर्वं तस्य सर्वथा विषयपरित्यागमाह--

**"श्येनवत्सुखदुःखी त्यागवियोगाभ्याम्" ॥ ५ ॥**

सर्वथा विषयपरित्यागः कर्तव्यः । यतस्त्यागवियोगाभ्यां सुखदुःखी= विषयस्य त्यागात्पुरुषः सुखी । तस्य स्वयं वियोगाच्च दुःखी भवति । श्येनवत्=यथाऽऽहितः श्येनः श्येनान्तैरामिषत्यागेन सुखी । तस्य स्वयं वियोगेन च दुःखी भवतीत्यर्थः ।

स्वयं त्यागः श्रेयानिति भावः ॥ ५ ॥

ननु कथं स्वयं विषयपरित्यागः स्यात् ? तत्राह--

**"अहिनिर्ल्वयनीवत्" ॥ ६ ॥**

यथा सर्पो निर्ल्वयनीं=स्वकीयां त्वचं भुक्तभोगां विज्ञाय स्वयमनायासेन परित्यजति, तथा भुक्तभोगान् विषयान् परिज्ञाय स्वयं मेधावी परित्यजेदित्यर्थः ॥ ६ ॥

निदर्शनान्तरमाह--

**"छिन्नहस्तवद्वा" ॥ ७ ॥**

यथा वा कश्चित्स्वकीयं छिन्नं हस्तं दुःखहेतुं मत्वा स्वयं परित्यजति, तथा परित्यजेदित्यर्थः ॥ ७ ॥

ननु विषयाणां परित्यागेऽपि मनसानुचिन्तने को दोषः? तत्राह--

**"असाधनानुचिन्तनं बन्धाय भरतवत्" ॥ ८ ॥**

असाधनानुचिन्तनम्=असाधनानां=विवेकज्ञानासाधनानांविषयाणामनुचिन्तनं=मनसाऽनुचिन्तनं पुरुषस्य बन्धाय=बन्धनाय भवति । भरतवत्=यथा राजर्षिभरतस्य हरिणीशावकानुचिन्तनं बन्धाय बभूवेत्यर्थः ।

विषयानुचिन्तनं न कार्यमिति भावः ॥ ८ ॥

ननु विषयानुचिन्तनाभावेऽपि बहुभिर्योगे को दोषः ? तत्राह--

**"बहुभिर्योगे विरोधो रागादिभिः कुमारीशंखवत"** ॥ ९ ॥

बहुभिः=स्वभावतोविपरीताशयैर्बहुभिर्योगे=संगे सति रागादिभिः= सङ्गदोषादभिव्यज्यमाने रागद्वेषादिभिर्विरोधः=परस्परं विरोधो भवति । कुमारीशंखवत्=यथा कुमार्या हस्ते सङ्गतानां बहूनां शङ्खानामन्योऽन्य-योगेन झणत्कारलक्षणो विरोध इत्यर्थः ॥ ९ ॥

ननु बहुभिर्योगे भवतु विरोधो दूषणम् । द्वाभ्यां योगे किं दूषणं ? तत्राह—

**"द्वाभ्यामपि तथैव"** ॥ १० ॥

योगे विरोध इति पदद्वयमनुवर्तते । द्वाभ्यामपि=द्वाभ्यां योगेऽपि तथैव=बहुभिर्योगवदेव विरुद्धसंलापादिना विरोधो दूषणमित्यर्थः ॥ १० ॥

नन्वेवन्तर्हि किं कुर्यात् ? तत्राह—

**"निराशः सुखी पिङ्गलावत्"** ॥ ११ ॥

निराशः=परिवर्जितसर्वाशः सुखी=सन्तोषसुखभाग्भवेत् । पिङ्गलावत्= यथा पिङ्गला काचित्सर्वाशां परित्यज्य सुखिनी बभूवेत्यर्थः ॥ ११ ॥

नन्वेकाकी स्वगृहारम्भेऽशक्तः कथं सुखी भवेत् ? तत्राह—

**"अनारम्भेऽपि परगृहे सुखी सर्पवत्"** ॥ १२ ॥

अनारम्भेऽपि=स्वगृहारम्भाभावेऽपि परगृहे=परनिर्मितशून्यालये वसन् सुखी=नित्यं सुखभाग्भवेत् । सर्पवत्=यथा सर्पः स्वगृहमनारम्भमाणोऽपि पर-गृहे वसन् सुखी भवतीत्यर्थः ॥ १२ ॥

ननु परगृहे वसन्नपि विवेकी बहुशास्त्राध्ययने गुरूणामुपासने च सक्तः किं कुर्य्यात् ? तत्राह—

**"बहुशास्त्रगुरूपासनेऽपि सारादानं षट्पदवत्"** ॥१३॥

बहुशास्त्रगुरूपासनेऽपि=बहूनां शास्त्राणां तदर्थं गुरूणाश्चोपासनेऽपि सक्तो विवेकी सारादानं=सारस्य=विवेकप्रत्ययोपयुक्तस्यार्थस्यादानं=ग्रहणं कुर्यात्। षट्पदवत्=यथा षट्पदः=भ्रमरः कुसुमेभ्यः सारमेवादत्ते नान्यदित्यर्थः ॥ १३ ॥

ननु सारमाददानस्यापि विवेकिनो जनाकुले संसारे समाधिभ्रेषः सेत्स्यति, तत्राह—

'इषुकारवन्नैकचित्तस्य समाधिहानिः ॥ १४ ॥

एकचित्तस्य=सारैकचित्तस्य=एकाग्रमनसो विवेकिनः कथमपि समाधिहानिर्न=न भवति । तत्रोदाहरणमिषुकारवत्=यथा शरैकचित्तस्य शरकारस्य पार्श्वाभ्यां ससैन्यराजगमनेऽपि न समाधिभ्रेषो जात इत्यर्थः ॥ १४ ॥

नन्वेकचित्तस्यापि कथञ्चित्प्रमादाच्छास्त्रीयनियमोल्लंघने किं स्यात् ? तत्राह—

" कृतनियमलङ्घनादानर्थक्यं लोकवत् " ॥ १५ ॥

कृतनियमलंघनात्=शास्त्रेण कृतस्य नियमस्य लङ्घनात्=उल्लंघनादानर्थक्यम्=अनर्थभावः=स्वार्थहानिर्भवति। लोकवत्=यथा लोके रुग्णस्य पुंसः शास्त्रकृतपथ्यादिनियमोल्लङ्घनादानर्थक्यमित्यर्थः ।

कथमपि नियमस्य लंघनं न कुर्य्यादिति भावः ॥ १५ ॥

ननु नियमज्ञाने तदुल्लङ्घनादानर्थक्येऽपि तद्विस्मरणे को दोषः ? तत्राह—

" तद्विस्मरणेऽपि भेकीवत् " ॥ १६ ॥

आनर्थक्यमित्यनुवर्तते । तद्विस्मरणेऽपि=तस्य शास्त्रेण कृतस्य नियमस्य विस्मरणेऽप्यस्यानर्थक्यं भवति । भेकीवत्=यथा कया चिद् राजकन्यकया नाम्ना भेक्या पाणिग्रहसमये 'भो आर्य्यपुत्र कदापि त्वद्वियोगो मे माभूदन्यथा मद्वियोगस्ते भविष्यति ' इति कृतस्य नियमस्य विस्मरणे दैवादेकाकिनो बहिर्गतस्यतद्भर्तुर्वसुधाधिपस्य भेकीवियोगलक्षणमानर्थक्यं बभूवेत्यर्थः ॥ १६ ॥

नन्वेतदुत्पन्नविवेकप्रत्ययस्य कर्तव्यमुक्तं । यः पुनर्विवेकोत्पत्त्यर्थं केवलं गुरुमुखादुपदेशमात्रं शृणोति तस्य किं कर्तव्यं ? तत्राह—

**" नोपदेशश्रवणेऽपि कृतकृत्यता, परामर्शादृते विरोचनवत् " ॥ १७ ॥**

उपदेशश्रवणेऽपि=गुरुमुखात्सत्यप्युपदेशश्रवणे परामर्शादृते=गुरुवाक्यविचारः परामर्शस्तं विना कृतकृत्यता=कृतार्थता न=न भवति। विरोचनवत्=यथा विरोचनस्य गुरुमुखादुपदेशश्रवणेऽपि परामर्शादृते कृतकृत्यता नाभूदित्यर्थः ।

श्रवणानन्तरं परामर्शः कर्तव्य इति भावः ॥ १७ ॥

ननु श्रवणानन्तरं कस्यायं परामर्शो दृष्टः ? तत्राह—

**"दृष्टस्तयोरिन्द्रस्य" ॥ १८ ॥**

परामर्श इति विपरिणम्यानुवर्तते । तयोः=विवेकार्थं गुरुं प्रजापतिमुपसर्पतोरिन्द्रविरोचनयोरिन्द्रस्य परामर्शो दृष्ट इत्यर्थः ॥ १८ ॥

नन्वेवं तर्हि श्रवणानन्तरं परामर्शे सति झटित्येव विवेकप्रत्ययस्य सिद्धिः स्यात्, तत्राह—

**"प्रणतिब्रह्मचर्य्योपसर्पणानि कृत्वा सिद्धिर्बहुकालात तद्वत्" ॥ १९ ॥**

प्रणतिब्रह्मचर्य्योपसर्पणानि=नम्रीभावः प्रणतिः । सर्वेन्द्रियसंयमो ब्रह्मचर्यम् । श्रद्धाभक्तिभ्यां यथाविधि गुरुं प्रत्युपगमनमुपसर्पणं । तान्येतानि कृत्वा=नियमेनानुष्ठाय सिद्धिः=श्रवणपरामर्शाभ्यां विवेकप्रत्ययस्य निष्पत्तिर्बहुकालात्=बहुकालानन्तरं भवति । न द्रागित्येव । तद्वत्=तच्छन्देनेन्द्रस्य परामर्शः । यथा प्रजापतौ गुरौ प्रणतिब्रह्मचर्य्योपसर्पणानि कुर्वत इन्द्रस्य श्रवणपरामर्शाभ्यां विवेकप्रत्ययस्य सिद्धिर्बहुकालादभवदित्यर्थः ॥ १९ ॥

ननु किमेवमेव सर्वत्र सर्वथा कालनियमः ? तत्राह—

"न कालनियमो वामदेववत्" ॥ २० ॥

कालनियमः=विवेकप्रत्ययस्य सिद्धौ सर्वथा कालस्य नियमो न=नास्ति । वामदेववत्=यथा वामदेवस्यैहिकसाधनाभावेऽपि प्राग्भवीयसाधनेभ्यो द्रागित्येव विवेकप्रत्ययोदयो बभूवेत्यर्थः ॥ २० ॥

ननु प्रणतिब्रह्मचर्योपसर्पणानि कुर्वतो गुरूणां तत्त्वोपदेशाच्चेद्विवेकसिद्धिस्तर्हि कुतो बहुकालापेक्षा ? तत्राह—

"अध्यस्तरूपोपासनात्पारंपर्य्येण यज्ञोपासकानामिव" ॥ २१ ॥

यत इति शेषः । सिद्धिरित्यनुवर्तते । यस्मादध्यस्तरूपोपासनात्=गुरुभिरुपदिष्टं रूपमध्यस्तरूपम् परोक्षत्वात् । तस्योपासनं=श्रद्धाभक्तिभ्यामनुष्ठानं=धारणामीति यावत्तस्मात्पारम्पर्य्येण=ध्यानादिपरंपरया विवेकप्रत्ययस्य सिद्धिर्भवति । यज्ञोपासकानामिव=यथा यज्ञादिकर्मानुष्ठायिनामदृष्टादि पारम्पर्य्येणाभ्युदयसिद्धिरित्यर्थः ।

तत्र प्रणतिब्रह्मचर्य्योपसर्पणानि कृत्वा श्रवणम् श्रुतस्यासंभावनानिवृत्त्यै श्रद्धाभक्तिभ्यां परामृश्य धारणं मननम् । मतस्य विपरीतभावनोपशान्त्यर्थं ध्यानं निदिध्यासनम् । तस्य पाकोऽङ्गभूतः समाधिः । तस्य प्रपाकोऽङ्गी समाधिः संप्रज्ञातः । ततश्चित्साक्षात्कारलक्षणा नाम्ना ऋतम्भरा प्रज्ञा सत्त्वपुरुषान्यताख्यातिरिति बहुकालविवेकः ॥ २१ ॥

नन्वेवञ्चेत्तर्हि कर्मभिरूर्ध्वगत्यैवालम् । कृतं परंपरायाससाध्येन मोक्षहेतुना विवेकप्रत्ययेन, तत्राह—

"इतरलाभेऽप्यावृत्तिः पञ्चाग्नियोगतो जन्मश्रुतेः" ॥ २२ ॥

इतरलाभेऽपि=वेदोक्तैर्निष्कामकर्मादिभिर्मोक्षेतरस्योर्ध्वगमनस्य लाभेऽपि=प्राप्तावप्यावृत्तिः=पुनरावृत्तिरस्ति न मोक्षवदनावृत्तिः। कुतः? पञ्चाग्नियोगतः=छान्दोग्योपनिषदि पञ्चमप्रपाठके द्युपर्जन्यधरानरयोषितां पञ्चाग्नीनां

संबन्धतो जन्मश्रुतेः='असौ वावलोको गौतमाग्निः'[1] इत्यादि-नोर्ध्वगतिमतोऽपि जन्मश्रवणादित्यर्थः ।

तत्रोर्ध्वगमनं ब्रह्मलोकपर्य्यन्तमिति सर्वे श्रुतिविदो भाष्यकृदादयः। ते च लोकाः सप्त पुरुषस्य कर्मिणः प्राकृतावस्थाविशेषा नेदृशो नगरभेदा इत्यनुसन्धेयम् ॥ २२ ॥

नन्वेवं विवेकप्रत्ययोत्पत्त्यर्थं ब्रह्मलोकान्तस्य निखिलसंसारस्य हानं तद्विलक्षणस्य च मोक्षस्योपादानं कस्य स्यात् ? तत्राह—

**"विरक्तस्य हेयहानमुपादेयोपादानं हंसक्षीरवत्" ॥२३॥**

विरक्तस्य=ऐहिकामुष्मिकविषयवितृष्णस्य हेयहानं=हेयस्य संसारस्य हानमुपादेयोपादानम्=उपादेयस्य मोक्षस्य चोपादानं संभवति।हंसक्षीरवत्= यथा हंसपक्षिणो नीरेण मिश्रिते क्षीरे नीरस्य हानं क्षीरस्य चोपादान-मित्यर्थः ॥ २३ ॥

ननु विरक्तस्यैतदुभयञ्चेत्तदा कृतं सत्सङ्गमाहात्म्येन, तत्राह—

**"लब्धातिशययोगाद्वा तद्वत्" ॥ २४ ॥**

हेयहानमुपादेयोपादानमित्यनुवर्तते । लब्धातिशययोगात्=लब्धः=संपा-दितो विवेकप्रत्ययकाष्ठालक्षणोऽतिशयो येन, तस्य सतः पुरुषस्य योगात्= संगाद्वा=अपि हेयहानमुपादेयोपादानञ्च संभवति । तद्वत्=हंससंगाद् हंस-स्येवेत्यर्थः ॥ २४ ॥

नन्वेवं रागिणोऽपि तदुभयं स्यात्, तत्राह—

**" न कामचारित्वं रागोपहते शुकवत् " ॥ २५ ॥**

रागोपहते=रागेण गुणेनाभिभूते पुरुषे कामचारित्वं=यथेष्टसञ्चारित्वमेव न=न संभवति । कुतस्तदुभयम् ? तत्रोदाहरणं शुकवत्=यथा रागोपह-तस्य शुकपक्षिणः कामचारित्वाभाव इत्यर्थः ॥ २५ ॥

ननु कुतोऽयं रागिणः कामचारित्वाभावः ? तत्राह—

**" गुणयोगाद् बद्धः शुकवत् " ॥ २६ ॥**

---

१ छां० प्रपा० ५-खं० ४–५–६–७–८–९ ।

यत इति शेषः। यस्मादसौ रागी गुणयोगात्=रागादिगुणसंबन्धाद् बद्धः=बन्धनं गतोऽस्ति । शुकवत=यथा गुणयोगाद् बद्धः शुकः पक्षी कामचारी न भवतीत्यर्थः ॥ २६ ॥

**ननु** भोगाद्रागशान्तौ रागिणोऽपि वैराग्यं सेत्स्यति, तत्राह—

**" न भोगाद्रागशान्तिर्मुनिवत् " ॥ २७ ॥**

भोगात्=विषयभोगाद्रागशान्तिः=रागस्य निवृतिर्न=न भवति। मुनिवत्=यथा सौभरिनाम्नो मुनेर्विषयभोगान्न रागस्य शान्तिरजायतेत्यर्थः ॥ २७ ॥

**ननु** कस्मात्तर्हि रागोपशान्तिः ? तत्राह—

**" दोषदर्शनादुभयोः " ॥ २८ ॥**

उभयोः=प्रकृतितत्कार्ययोर्द्वयोर्दोषदर्शनात्=परिणामित्वदुःखात्मकत्वादिदोषदर्शनाद्रागः शाम्यतीत्यर्थः ॥ २८ ॥

ननूपदेशादेव विवेकप्रत्ययः सेत्स्यति किमुभयोर्दोषदर्शनाद्रागस्य शान्त्या ? तत्राह—

**" न मलिनचेतस्युपदेशबीजप्ररोहोऽजवत् " ॥ २९ ॥**

मलिनचेतसि=रागादिमलेन मलिने चित्ते नोपदेशबीजप्ररोहः=उपदेशबीजस्य प्ररोहो न भवति । तत्रोदाहरणमजवत्=यथाऽजस्य राज्ञो भार्य्याशोकादिना मलिने चेतसि वसिष्ठोपदेशबीजस्य प्ररोहो नाभूदित्यर्थः॥ २९॥

**ननु** मलिने चेतसि यथाकाममुपदेशबीजं मा प्ररोहतु यत्किंचित्तु प्ररोहिष्यति, तत्राह—

**" नाभासमात्रमपि मलिनदर्पणवत् " ॥ ३० ॥**

आभासमात्रमपि=दूरे तावदुपदेशबीजप्ररोहः, मलिनचेतसि तु तदाभासमात्रमपि न=न भवति । मलिनदर्पणवत्=यथा मलिने दर्पणे मुखाभासाभाव इत्यर्थः ॥ ३० ॥

**ननु** तथापि गुरूणामुपदेशो न व्यर्थोऽवश्यं ततो ज्ञानं भविष्यति, तत्राह—

"न तज्जस्यापि तद्रूपता पंकजवत्" ॥ ३१ ॥

तज्जस्यापि=तस्माद्गुरूणामुपदेशाज्जायमानस्यापि ज्ञानस्य न तद्रूपता=नोपदेशानुरूपता भवति। चेतोदोषात्। पङ्कजवत्=यथा बीजाज्जायमानस्यापि पङ्कजस्य न बीजानुरूपता पंकदोषादित्यर्थः ॥ ३१ ॥

तदेवं श्रवणादिषु वैराग्यस्यैव प्राधान्येन विवेकप्रत्ययोत्पत्तिसाधनत्वमभिधाय यः पुनरणिमादिभूतियोगेनैव कृतकृत्यतां मन्यते तं प्रत्याह

"न भूतियोगेऽपि कृतकृत्यतोपास्यसिद्धि-
वदुपास्यसिद्धिवत्" ॥ ३२ ॥

अध्यायपरिसमाप्तौ वीप्सा। भूतियोगेऽपि=कथञ्चिद्योगमभ्यस्यतोऽणिमादिविभूतियोगेऽपि कृतकृत्यता=कृतार्थत्वं न=न जायते। योगे विप्रयोगस्यावश्यंभावात्। उपास्यसिद्धिवत्=व्यतिरेक्युदाहरणमिदं, यथोपास्यस्य=मुमुक्षुभिरुपास्यमानस्य विवेकज्ञानस्य सिद्धितः कृतकृत्यतेत्यर्थः ॥३२॥

आत्मतत्त्वोपदेशादिविवेकज्ञानसाधनम्।
निरूपितं तुरीयेऽस्मिन्नितिहासैःपुरस्कृतम् ॥ १ ॥

**इति श्रीमत्परहंसपरिव्राजकाचार्योदासीनवर्य्यात्मारामभगवत्पादशिष्यहरिप्रसादकृतायां सांख्यसूत्रवृत्तौ चतुर्थोऽध्यायः ॥ ४ ॥**

---

## अथ पञ्चमोऽध्यायः ।

चतुर्भिरध्यायैः स्वसिद्धान्तं निरूप्य तद्दार्ढ्याय परसिद्धान्तमपाकर्तुं पञ्चमाध्यायमारभमाणो ननु विवेकप्रत्ययाच्चेन्निःशेषतो दुःखनिवृत्तिस्तर्हि किं मङ्गलेन लौकिकवैदिकाचारेणेति शङ्कान्तावदपाकरोति ।

**"मङ्गलाचरणं शिष्टाचारात्फलदर्शनाच्छ्रुतितश्चेति"॥१॥**

इति शब्दो हेत्वन्तराकांक्षां निरस्यति । मङ्गलाचरणं=मङ्गलानां=शुभानां लौकिकवैदिककर्मणामाचरणम्=अनुष्ठानं विवेकिभिरवश्यं कर्तव्यम् । कुतः ? शिष्टाचारात्=शिष्टैः=स्वधर्मनिष्ठैर्वैदिकैः पुरुषैराचारात्=आचरणात् । फलदर्शनात्=अनुष्ठितानां तेषां तत्तदभ्युदयादिलक्षणस्य फलस्य दर्शनात् श्रुतितश्च=

**'कुर्वन्नेवेह कर्माणि जिजीविषेच्छत७समाः"[१] यान्यनवद्यानि कर्माणि, तानि सेवितव्यानि, नो इतराणि,[२]**

इत्यादि श्रुतितश्चेत्यर्थः ॥ १ ॥

ननु अस्तु विवेकिनामपि कर्तव्यं लौकिकं वैदिकं कर्म । तथापि तत्फलदानायेश्वराभ्युपगमो व्यर्थः कर्मणैव फलनिष्पत्तेस्तस्य तदधिष्ठितत्वासिद्धेश्च । तत्राह—

**"न, ईश्वराधिष्ठिते फलनिष्पत्तिः कर्मणा तत्सिद्धेः"॥२॥**

चोऽनुवर्तते । न=कर्मणो जडत्वात्स्वतः फलदातृत्वं न। किन्त्वीश्वराधिष्ठिते=तदधिष्ठानविषयीभूते तस्मिन् फलनिष्पत्तिः=तत्तदभ्युदयादिलक्षणस्य फलस्य सिद्धिः । कर्मणा च=कर्महेतुना च तत्सिद्धेः=यत्कर्म, तत्सर्वं पराधिष्ठितं सत् फलदं, यथा प्रजानाथाधिष्ठितं प्रजाकर्म, तथा चेदं वैदिकं कर्मेति तस्य=ईश्वराधिष्ठितत्वस्य सिद्धेरित्यर्थः ॥ २ ॥

---

१ यजुः अ० ४० मं० २ । २ तै० व० १-अनुवा० ११-२-३ ।

**ननु** कस्मादीश्वरः परेषां कर्माण्यधितिष्ठति ? तत्राह—

**"स्वोपकारादधिष्ठानं लोकवत्" ॥ ३ ॥**

स्वोपकारात्=स्वीयानामुपकारः स्वोपकारः **'तस्यात्मानुग्रहाभावेऽपि भूतानुग्रहप्रयोजनम्'** इति योगभाष्योक्तेः। तस्मात्=जीवोपकृतिमात्रादीश्वरस्याधिष्ठानं=जीवकर्मसुसंबन्धविशेषः=अधिष्ठातृत्वमितियावत्। लोकवत्=यथा लोके कारुणिकस्य प्रजानाथस्य प्रजाकर्मस्वधिष्ठानमित्यर्थः ॥ ३ ॥

**ननु** यथेश्वरस्य स्वीयोपकारस्तथा स्वोपकारोऽपि स्यात्को दोषस्तत्राह-

**"लौकिकेश्वरवदितरथा" ॥ ४ ॥**

इतरथा=स्वीयोपकारवत्स्वोपकारेसद्भवतिलौकिकेश्वरवत्=लोकसिद्धप्रजेश्वरवदपर्याप्तकामः स्यादित्यर्थः ॥ ४ ॥

**नन्वा**त्मानमुपकुर्वाणोऽपि नासौ लौकिकेश्वरवन्मन्तव्यस्तत्राह—

**"पारिभाषिको वा" ॥ ५ ॥**

वा=आत्मानमुपकुर्वाणोऽपि चेदीश्वरस्तर्हि पारिभाषिकः=स्वपरिभाषामात्रक्लृप्तः स्यान्न सर्वसंमत इत्यर्थः ॥ ५ ॥

**ननु** पर्याप्तकामत्वात्तस्य स्वोपकाराभावेऽपि रागाभावात्कथमधिष्ठातृत्वं सिध्येत् ? तत्राह—

**"न रागादृते तत्सिद्धिः प्रतिनियतकारणत्वात्" ॥६॥**

न रागादृते=नान्तरेण रागम्। किन्तु करुणालक्षणाद्रागादीश्वरस्य तत्सिद्धिः=अधिष्ठातृत्वसिद्धिः। कुतः ? प्रतिनियतकारणत्वात्=प्रवृत्तिं प्रति रागमात्रस्य नियमेन कारणत्वादित्यर्थः ॥ ६ ॥

**ननु** रागी भवन्नीश्वरो नित्यमुक्तो न भवेत्, तत्राह—

**"तद्योगेऽपि न नित्यमुक्तः" ॥ ७ ॥**

---

१ यो०पा० १—"तत्रनिरतिशयं सर्वज्ञबीजम्" इति सूत्रभाष्यम्।

नेत्यनुवर्त्तते । तद्योगेऽपि=तस्य करुणालक्षणस्य रागस्य योगे=संबन्धे सत्यपि स नित्यमुक्तो नेति न । किन्तु नित्यमुक्तः=सदैवेश्वरः सदैव मुक्त इत्यर्थः ।

तत्रेश्वरस्य क्लेशात्मको रागो नाभिधीयते । किन्तु करुणात्मकः । एतेन तद्योगे सत्यपि न तस्य नित्यमुक्तत्वक्षतिः। क्लेशात्मकरागस्यैव तत्क्षतिकरत्वात् । नाप्यधिष्ठातृत्वानुपपत्तिः । तादृग् रागाभावेऽपि करुणालक्षणरागस्य सद्भावात्कारुणिकानामिवेश्वरस्यापि तदुपपत्तेः । करुणा चास्य भगवतो जगदधिपतेरागन्तुकी न, किन्तु स्वाभाविकी, नित्यत्वादिति न कश्चिद्दोष इत्यनुसन्धेयम् ॥ ७ ॥

ननु जीव एवेश्वरः संपद्यते, न तद्व्यतिरिक्तः कश्चनेश्वरः, तस्य तत्संपत्तिश्च न स्वभावात्, किन्तु प्रकृतियोगात्, तत्राह—

"प्रधानशक्तियोगाच्चेत्संगापत्तिः" ॥ ८ ॥

प्रधानशक्तियोगात्=प्रधानात्मिका शक्तिःप्रधानशक्तिः=प्रकृतिस्तस्या योगः=संयोगस्तस्मात् चेद्=यदि जीवस्यैश्वर्य्यं, तदा तस्य संगापत्तिः=निःसंगताभंगापत्तिः स्यादित्यर्थः ॥ ८ ॥

नन्वस्तु तर्हि तत्सत्तामात्राज्जीवस्यैश्वर्य्यं, तत्राह—

" सत्तामात्राच्चेत् सर्वैश्वर्य्यम्" ॥ ९ ॥

सत्तामात्राच्चेत्=प्रधानशक्तेस्ताटस्थ्येनविद्यमानता सत्ता, तन्मात्राच्चेदैश्वर्य्यं, तदा सर्वैश्वर्य्यं=सर्वेषां समानमैश्वर्य्यं स्यादित्यर्थः । प्रकृतिसत्तायाः सर्वान् प्रत्यविशेषादितिभावः ॥ ९ ॥

ननु समानत्वात्सर्व एवेश्वराः सिध्यन्तु को दोषस्तत्राह—

" प्रमाणाभावान्न तत्सिद्धिः" ॥ १० ॥

प्रमाणाभावात्=प्रमाणमत्र प्रत्यक्षम् । तदभावात्तत्सिद्धिः=तस्य=सर्वैश्वर्य्यस्य=सर्वेषामीश्वरभावस्य सिद्धिर्न=न भवतीत्यर्थः ॥ १० ॥

ननु मास्तु प्रत्यक्षमनुमानं भविष्यति, तत्राह—

"संबंधाभावान्नानुमानम्" ॥ ११ ॥

संबन्धाभावात्=संबन्धोव्याप्तिः, तदभावस्तद्ग्रहाभावः,तस्मान्नानुमानम्=अनुमानमपि तत्साधकं नेत्यर्थः ॥ ११ ॥

ननु श्रुत्या तर्हि जीवस्य नित्येश्वरभावः सिध्यतु, तत्राह—

"श्रुतिरपि प्रधानकार्य्यत्वस्य" ॥ १२ ॥

श्रुतिरपि=वैदिकी श्रुतिरपि प्रधानकार्य्यत्वस्य=जीवैश्वर्य्ये प्रकृतिकार्य्यत्वस्य बोधिका विद्यते, न नित्येश्वरभावस्येत्यर्थः ॥ १२ ॥

ननु मास्तु जीव ईश्वरः, विज्ञानात्मकंब्रह्मैवाविद्याशक्तियोगादीश्वरो भविष्यति, तत्राह—

"नाविद्याशक्तियोगो निःसंगस्य" ॥ १३ ॥

अविद्याशक्तियोगः=विद्याबाध्या, सदसद्विलक्षणा, मायाशक्तिरविद्याशक्तिस्तस्या योगः=संगो निःसङ्गस्य=निष्कान्तसर्वसंगस्य ब्रह्मणो न=न संभवतीत्यर्थः ।

तदसंभवे तु तदसंभव एवेतिभावः ॥ १३ ॥

नन्वविद्यायोगोऽपि तस्याविद्यक एवाभ्युपगम्यते न पारमार्थिकः,तत्राह-

"तद्योगे तत्सिद्धावन्योऽन्याश्रयत्वम्" ॥ १४ ॥

अविद्यायां सिद्धायामाविद्यकस्तद्योगः सिध्यति, नचाद्याप्यविद्या सिद्धाऽस्ति, तद्योगे=अविद्यायोगे सिद्धे सति तत्सिद्धौ=अविद्यासिद्धौ चान्योऽन्याश्रयत्वं=परस्पराश्रयत्वं दूषणं स्यादित्यर्थः ॥ १४ ॥

नन्वविद्यातद्योगयोर्बीजाङ्कुरवदनादित्वान्नान्योऽन्याश्रयत्वं दोषः,तत्राह-

"न बीजाङ्कुरवत्सादिसंसारश्रुतेः" ॥ १५ ॥

बीजाङ्कुरवत्=बीजाङ्कुरयोरिव न=अनादित्वं न । कुतः ? सादिसंसारश्रुतेः=सादिभूतस्याविद्यातद्योगलक्षणसंसारस्य श्रवणादित्यर्थः ॥ १५ ॥

**नन्व**विद्यैवासिद्धेति न युक्तम् । विद्यान्यत्वस्यैवाविद्यात्वात्, तत्राह–

**" विद्यातोऽन्यत्वे ब्रह्मबाधप्रसंगः "॥ १६ ॥**

विद्यातोऽन्यत्वे=विद्यान्यत्वस्यैवाविद्यात्वे ब्रह्मबाधप्रसंगः=विद्याऽन्यत्वाविशेषाद् ब्रह्मणोऽप्यविद्यावद् बाधः प्रसज्येतेत्यर्थः ॥ १६ ॥

**विपक्षे** दण्डमाह–

**" अबाधे नैष्फल्यम् " ॥ १७ ॥**

अबाधे=ब्रह्मबाधाभावे नैष्फल्यं=विद्याया निष्फलत्वं स्यादित्यर्थः ॥ १७ ॥

**ननु** विद्याऽन्यत्वं न विद्याभिन्नत्वं विवक्षितम् । अपि च विद्याबाध्यत्वम् । तेन न ब्रह्मबाधप्रसंगस्तत्राह–

**"विद्याबाध्यत्वे जगतोऽप्येवम्" ॥ १८ ॥**

विद्याबाध्यत्वे=विद्याबाध्यत्वस्यैवाविद्यात्वे जगतोऽपि=प्रपञ्चस्याप्येवम्=अनया रीत्याऽविद्यात्वं स्यादित्यर्थः ।

**विद्या**बाध्यत्वाविशेषादिति भावः ॥ १८ ॥

**नन्वस्तु** जगतोऽप्यविद्यात्वम् । किं तेन ? तत्राह–

**"तद्रूपत्वे सादित्वम्" ॥ १९ ॥**

तद्रूपत्वे=जगतोऽप्यविद्यास्वरूपत्वे सादित्वं=जगदिवाविद्याया अपि सादित्वं स्यान्नानादित्वमित्यर्थः ।

तथा च नेष्टसिद्धिरिति भावः ॥ १९ ॥

**ननु** तवापि जीवानां धर्माधर्मादृष्टसिद्धौ तत्फलप्रदाता कश्चिदीश्वरः सिध्यति । तदेवं नास्ति । कुतस्तत्सिद्धिस्तत्राह–

**"न धर्मापलापः प्रकृतिकार्य्यवैचित्र्यात्" ॥ २० ॥**

धर्मापलापः=धर्मलक्षणादृष्टस्यापह्नवो न=न संभवति । कुतः ? प्रकृतिकार्य्यवैचित्र्यात्=प्रकृतिकार्य्याणां सुखादीनां विचित्रताया दर्शनादित्यर्थः ।

कश्चित्सुखी, कश्चित्सुखितरः, कश्चित्सुखितम इति प्रकृतिकार्य्यवैचित्र्यान्यथानुपपत्त्या धर्मसिद्धिरिति भावः ॥ २० ॥

**ननु** स्वभावादेव वैचित्र्यमस्तु । किमसिद्धेन धर्मेण? तत्राह—

**"श्रुतिलिङ्गादिभिस्तत्सिद्धिः"** ॥ २१ ॥

**'पुण्यो वै पुण्येन कर्मणा भवति पापः पापेन'** इत्यादिश्रुतिः । सुखभोगोऽदृष्टजन्यो भोगत्वाद् दुःखभोगावदित्यादिलिङ्गम् । आदिना योगिप्रत्यक्षमित्येभिस्त्रिभिः प्रमाणैस्तात्सिद्धिः=तस्य धर्मस्य सिद्धिरित्यर्थः ।

**स्वभाव**वैचित्र्यकल्पने गौरवान्न स्वभावाश्रयणं युक्तमिति भावः॥२१॥

**ननु** यदस्माकं न प्रत्यक्षं, तन्नास्त्येव, तत्राह—

**" न नियमः प्रमाणान्तरावकाशात्"** ॥ २२ ॥

न नियमः=यदस्माकं न प्रत्यक्षं तन्नास्त्येवेति नियमो न।कुतः?प्रमाणान्तरावकाशात्=अप्रत्यक्षे वस्तुनि प्रमाणान्तरयोः शब्दानुमानयोरवकाशस्य=गोचरत्वस्य संभवादित्यर्थः ॥ २२ ॥

**धर्मं** प्रसाध्याधर्मं साधयन्नाह—

**"उभयत्राप्येवम्"** ॥ २३ ॥

उभयत्रापि=धर्मवदधर्मेऽप्येवं=पूर्वोक्तप्रकारेण श्रुतिलिङ्गादिकं प्रमाणं बोध्यमित्यर्थः ॥ २३ ॥

**ननु** धर्मवदधर्मसाधनं न युक्तम् । अर्थादेव तत्सिद्धेस्तत्राह—

**"अर्थात् सिद्धिश्चेत्समानमुभयोः"** ॥ २४ ॥

अर्थात् सिद्धिश्चेत्=एकस्मिन् सिद्धे तदपरस्य तत्संबन्धितया सिद्धिरर्थात्सिद्धिस्तत्र धर्मे सिद्धे तत्प्रतिद्वन्द्वित्वादधर्मस्य सिद्धिश्चेत्तदा समानमुभयोः=एतद् धर्माधर्मयोरुभयोरपि समानमित्यर्थः ।

**अधर्मवद्** धर्मेऽपि पर्य्यनुयोगोऽयं तुल्य इति भावः ॥ २४ ॥

---

१ बृहदा० अ०५—ब्रा २—१३ ।

**ननु** धर्मादिस्वीकारे पुरुषस्य निर्गुणत्वं न स्यात्, तत्राह—

**" अन्तःकरणधर्मत्वं धर्मादीनाम् " ॥ २५ ॥**

धर्मादिनां=धर्माधर्मसुखदुःखरागद्वेषज्ञानेच्छायत्नादीनामन्तःकरणधर्मत्वं=बुद्धिधर्मत्वं न पुरुषधर्मत्वमित्यर्थः ॥ २५ ॥

**ननु** धर्मादीनामन्तःकरणधर्मत्वे पुरुषे तत्समारोपो वक्तव्यः । समारोपितानाञ्च तेषां विवेकज्ञानेनात्यन्तबाधे सत्कार्य्यवादो न सिध्येत्, तत्राह—

**"गुणादीनाञ्च नात्यन्तबाधः" ॥ २६ ॥**

गुणादीनाञ्च=उपचारात्कार्य्येकारणप्रयोगस्तद्बाधाप्राप्तेः । वैशेषिकपरिभाषया वा प्रयोगोऽयम् । धर्मादीनाञ्च नात्यन्तबाधः=न स्वरूपतो बाध इत्यर्थः ।

अयस्यौष्ण्यवदात्मनि संसर्गतो बाधाभ्युपगमादिति भावः ॥ २६ ॥

**ननु** स्वस्य धर्मादिज्ञाने जातेऽपि परस्य तज्ज्ञानं कथं भवेत् ? तत्राह—

**" पञ्चावयवयोगात्सुखसंवित्तिः " ॥ २७ ॥**

गुणादीनामित्यनुवर्तते । पञ्चावयवयोगात्=पञ्चानां प्रतिज्ञाहेतूदाहरणोपनयनिगमनानामवयवानां योगः=मेलनं यस्मिन् परार्थानुमाने तस्माद्धर्मादीनां सुखसंवित्तिः=सुखेनानायासेन संवित्तिः=ज्ञानं भवतीत्यर्थः ॥ २७ ॥

**ननु** व्याप्तिसिद्ध्यधीनजन्म ह्यनुमानम् । सा तावत्कथं भवेत् ? तत्राह—

**" नसकृद्ग्रहणात् संबन्धसिद्धिः " ॥ २८ ॥**

नसकृद्ग्रहणात्=नैकधेत्यादिवत्समासः, साध्यसाधनयोरसकृत्सहचारग्रहणात्संबन्धसिद्धिः=संबन्धो व्याप्तिस्तत्सिद्धिर्भवतीत्यर्थः ॥ २८ ॥

**ननु** केयं व्याप्तिः ? तत्राह—

**"नियतधर्मसाहित्यमुभयोरेकतरस्य वा व्याप्तिः" २९ ॥**

उभयोः=साध्यसाधनयोर्द्वयोरेकतरस्य वा=साधनमात्रस्य वा यन्नियतधर्मसाहित्यं=नियतम्=अव्यभिचरितं, धर्मतायां साहित्यं, धर्मसाहित्यं=सहचारः । अव्यभिचरितसंबन्ध इति यावत्सा व्याप्तिरित्यर्थः ।

**समव्याप्ति**प्रदर्शनार्थमुभयोरिति, विषमव्याप्तिप्रदर्शनार्थमेकतरस्यवेति ग्रहणम्।तत्रानित्यत्वकृतकत्वयोः समव्याप्तिः । धूमस्य च विषमव्याप्तिरिति विवेकः ॥ २९ ॥

**ननु** नियतधर्मसाहित्यं न व्याप्तिः, अपि च तत्त्वान्तरं, तत्राह—

**" न तत्त्वान्तरं वस्तुकल्पनाप्रसक्तेः " ॥ ३० ॥**

न तत्त्वान्तरं=नियतधर्मसाहित्यातिरिक्तं पदार्थान्तरं व्याप्तिर्न । कुतः? वस्तुकल्पनाप्रसक्तेः=तत्त्वान्तरकल्पनाप्रसंगादित्यर्थः ।

**धर्म**कल्पनापेक्षया धर्मिकल्पने गौरवं स्यादिति भावः ॥ ३० ॥

**ननु** नियतधर्मसाहित्यं कीदृशं विवक्षितं? तत्राह--

**"निजशक्त्युद्भवमित्याचार्य्याः" ॥ ३१ ॥**

निजशक्त्युद्भवं=वस्तुनो नैसर्गिकी शक्तिर्निजशक्तिस्तयोद्भवः=अभिव्यक्तिर्यस्य, तत्तथाभूतं साहित्यमित्याचार्य्याः=सांख्याचार्याःप्राहुरित्यर्थः ।

**तत्र**स्वभावप्रतिबद्धं व्याप्यम् । येन च प्रतिबद्धं तद्व्यापकम् । स्वभावाभिव्यक्तः प्रतिबन्धो व्याप्तिरीति विवेकः ॥ ३१ ॥

**"आधेयशक्तियोग इति पञ्चशिखः" ॥ ३२ ॥**

आधेयशक्तियोगः=आधानं सङ्केतः, तद्विषयीभूता शक्तिः=इदं व्याप्यं-व्यापकञ्चेदमिति सांकेतिकी शक्तिराधेयशक्तिः । तल्लक्षणो योगः=वस्तुनो-रव्यभिचरितसंबन्धःसाहित्यमिति पञ्चशिखः=पञ्चशिखाचार्य्याइत्यर्थः ३२॥

**ननु** स्वरूपशक्तिरेव व्याप्तिरस्तु । किमाधेयशक्त्या ? तत्राह—

**"न स्वरूपशक्तिर्नियमः पुनर्वादप्रसक्तेः" ॥ ३३ ॥**

स्वरूपशक्तिः=वस्तुनःस्वरूपभूता शक्तिः स्वरूपशक्तिर्नियमः=व्याप्तिर्न=न भवति । कुतः ? पुनर्वादप्रसक्तेः=घटः कलश इत्यादिवत्पौनरुक्त्यप्रसंगादित्यर्थः ॥ ३३ ॥

**ननु** कुतः पौनरुक्त्यं ? तत्राह—

"विशेषणानर्थक्यप्रसक्तेः" ॥ ३४ ॥

शक्तो देवदत्त इत्यादौ विशेषणस्य 'शक्त, इत्यस्यानर्थक्यप्रसक्तेः= नैरर्थक्यप्रसंगादित्यर्थः ।

यद्वा स्वरूपात्मिका शक्तिः, तदा 'शक्तो देवदत्त,इत्यादौ देवदत्त इत्युक्ते शक्त इत्यप्ययुक्त एव। तदात्मकत्वात् । तथा च पुनस्तत्प्रयोगः कलशो घट इत्यादौ कलश इव निरर्थकः । नैरर्थक्यप्रसक्तिरेव च पौनरुक्त्यप्रसक्तिरिति भावः ॥ ३४ ॥

ननु स्वरूपशक्तेर्व्याप्तित्वानुपपत्तेरनुपलम्भात्पुनर्वादप्रसक्तिर्न दोषस्तत्राह—

"पल्लवादिष्वनुपपत्तेः" ॥ ३५ ॥

पल्लवादिषु=वृक्षादिभ्यश्छिन्नेषु पल्लवादिषु वर्तमानायाः स्वरूपशक्तेरनु-पपत्तेश्च=व्याप्तित्वानुपपत्तेश्चेत्यर्थः ।

तत्र स्वरूपात्मिकायाः शक्तेर्व्याप्तित्वे यथा दूरतो दृष्टिपथमारोहन्तो वृक्षादिसंलग्नाः पल्लवादयो वृक्षादिकमनुमापयन्ति । तथा छिन्ना अप्यनु-मापयेयुः । वर्तमानस्वरूपत्वात् । न च ते तथाऽनुमापयन्ति । तस्मात्स्व-रूपशक्तिर्न नियम इति भावः ॥ ३५ ॥

ननु मास्तु स्वरूपशक्तिर्व्याप्तिः । निजशक्त्यभिव्यक्तो योग एव व्याप्ति-रस्तु । कृतमाधेयशक्त्या, तत्राह—

"आधेयशक्तिसिद्धौ निजशक्तियोगः समान-न्यायात्" ॥ ३६ ॥

आधेयशक्तिसिद्धौ=संकेताभिव्यक्तशक्तेर्व्याप्तित्वसिद्धौ निजशक्तियोगः= निजशक्त्यभिव्यक्तो योगोऽपि व्याप्तित्वेन सिद्ध एव। कुतः? समानन्यायात्= युक्तिसाम्यादित्यर्थः ।

तत्र निजशक्त्यभिव्यक्तो योगो व्याप्तिरिति सांख्याचार्य्याः । संकेताभि-व्यक्तशक्तिलक्षणो योगो व्याप्तिरिति पञ्चशिखाचार्य्या इति विवेकः ॥ ३६ ॥

नन्वनुमानं प्रमाणीकर्तुं यथालिङ्गलिङ्गिनोः संबन्धो निरूपितस्तथा शब्दं प्रमाणीकर्तुं शब्दार्थसंबन्धोऽपि निरूपणीयः, कश्च भवतां शब्दार्थयोः संबन्धः ? तत्राह—

**"वाच्यवाचकभावः संबन्धः शब्दार्थयोः" ॥ ३७ ॥**

शब्दार्थयोः=शब्दस्यार्थस्य च मिथो वाच्यवाचकभावः=वाच्योऽर्थो वाचकः शब्दस्तद्भावः=वाच्यवाचकत्वं तल्लक्षणः संबन्धः=सनातनः संबन्ध इत्यर्थः ।

अयमेव संबन्धो वृत्तिरित्याख्यायते । तत्र साक्षात्संबन्धः शक्तिवृत्तिः । परम्परासंबन्धो लक्षणावृत्तिः । सा च स्वशक्यसंबन्धिनिस्वशक्यगुणसंबन्धिनि च नियतेति बोद्धव्यम् ॥ ३७ ॥

ननु ज्ञातः संबन्धो बोधको भवति नाज्ञात इतितत्संबन्धज्ञप्तिः कथं स्यात्, तत्राह—

**"त्रिभिः संबन्धसिद्धिः" ॥ ३८ ॥**

त्रिभिः=आप्तोपदेशः, वृद्धव्यवहारः, प्रसिद्धपदसन्निधानमित्येभिस्त्रिभिः संबन्धसिद्धिः=संबन्धस्य=वाच्यवाचकभावलक्षणस्यशब्दार्थसंबन्धस्य सिद्धिः=ज्ञप्तिर्भवतीत्यर्थः ॥ ३८ ॥

ननु भवतु त्रिभिः संबन्धसिद्धिः । तथापि तत्सिद्धिनियमः कस्यात् कार्ये वा कार्याकार्य्ययोरुभयत्र वा, तत्राह—

**"न कार्य्ये नियम उभयथादर्शनात्" ॥ ३९ ॥**

अस्माकं सांख्यानां कार्य्ये=कार्य्यबोधके "गामानय शुक्लां दण्डेन" इत्याद्यात्मके चोदनावाक्ये नियमः=संबन्धसिद्धिनियमो न=नास्ति।कुतः? उभयथादर्शनात्=कार्यवदकार्य्यबोधके "जगदधिपतिरीश्वरः पुत्रस्ते जातः" इत्याद्यात्मके सिद्धवाक्येऽप्याप्तोपदेशादिना संबन्धसिद्धिदर्शनादित्यर्थः ३९॥

नन्वेवं संबन्धसिद्धौ लोके शब्दार्थप्रतीतिसंभवेऽपि वेदे तदर्थप्रतीतिः कथं स्यात्, तत्राह—

**"लोके व्युत्पन्नस्य वेदार्थप्रतीतिः" ॥ ४० ॥**

लोके=लौकिके शब्दे व्युत्पन्नस्य=आप्तोपदेशादिना गृहीतार्थसंबन्धस्य वेदार्थप्रतीतिः=वैदिकशब्दानामर्थस्य प्रतीतिः=ज्ञप्तिः संभवतीत्यर्थः ।

**यादृशा** लौकिकाः शब्दास्तादृशा वैदिका इत्यभ्युपगमादिति भावः ॥ ४० ॥

**ननु** लौकिकशब्दानांपौरुषेयत्वादाप्तोपदेशेन, अर्थस्यातीन्द्रियत्वाभावाच्च वृद्धव्यवहारादिना संबन्धसिद्धौ तदर्थप्रतीतिः संभवति। वेदे तद्विपर्य्ययात्संबन्धासिद्धौ तदर्थप्रतीतिः कथं संभवेदित्याशंकते ।

**"न त्रिभिरपौरुषेयत्वाद् वेदस्य तदर्थस्यातीन्द्रियत्वात्" ॥ ४१ ॥**

संबन्धसिद्धिरित्यनुवर्तते वेदस्य=ऋगृयजुःसामाथर्वनाम्नो भगवतो वेदस्यापौरुषेयत्वात्=पुरुषप्रणीतत्वाभावात्तदर्थस्य=वेदार्थस्य चातीन्द्रियत्वात्=इन्द्रियगोचरत्वाभावान्नाप्तोपदेशादिभिस्त्रिभिः संबन्धसिद्धिः संभवतीत्यर्थः ॥

**संबन्ध**सिद्ध्यसंभवे दूरे तदर्थप्रतीतिसंभव इति भावः ।

**तत्रा**पौरुषेयत्वादाप्तोपदेशासंभवः तदर्थस्यातीन्द्रियत्वाद्वृद्धव्यवहारप्रसिद्धपदसन्निधानयोरसंभवस्तदसंभवेचसंबन्धासिद्ध्यसंभव इति विवेकः ४१॥

**तत्रादौ** वेदस्यातीन्द्रियार्थत्वं निरस्पति ॥

**"न यज्ञादेः स्वरूपतो धर्मत्वं वैशिष्ट्यात्" ॥ ४२ ॥**

न=यदुक्तं तन्न । यतो यज्ञादेः=यज्ञदानतपआदिकर्मणः स्वरूपतः=साक्षाद्धर्मत्वं=वेदार्थत्वमभ्युपगम्यते । वैशिष्ट्यात्=विशिष्टफलजनकत्वादित्यर्थः ॥ ४२ ॥

**अपौरु**षेयत्वादाप्तोपदेशासंभवं निराकरोति ॥

**"निजशक्तिर्व्युत्पत्त्या व्यवच्छिद्यते" ॥ ४३ ॥**

निजशक्तिः=वेदानामपौरुषेयत्वेऽपि या स्वाभाविकी शक्तिः=शब्दानामर्थैः स्वाभाविकः संबन्धः, सैवाप्तैरन्तर्वाणिभिरयमस्यार्थ इत्येवंरूपया व्युत्पत्त्या=शब्दार्थावबोधकशक्त्या व्यवच्छिद्यते=व्यावर्त्योपादिश्यते इत्यर्थः ।

**तथा**चाप्तोपदेशादीनां त्रयाणां संभवान्नापौरुषेयवेदेऽपि संबन्धसिद्ध्यसंभवः । तदसंभवाभावे चोपपन्ना लोकवत्तदर्थप्रतीतिरिति भावः ॥ ४३ ॥

**ननु** यज्ञादेः क्रियात्मकत्वेन योग्यत्वात्तत्राप्तोपदेशादिभिः संबन्धसिद्धिसंभवेऽप्ययोग्येषु वेदार्थेषु तत्सिद्धिःकथं स्यात्, तत्राह—

**"योग्यायोग्येषुप्रतीतिजनकत्वात्तत्सिद्धिः" ॥ ४४ ॥**

योग्यायोग्येषु=निदर्शनार्थं योग्यपदम् । इन्द्रिययोग्येषु यज्ञादिकर्मस्विव तदयोग्येष्वर्थेष्वपि पदानां प्रतीतिजनकत्वात्=प्रतीतिजनकत्वसाम्यात्तत्सिद्धिः=तस्य स्वाभाविकसंबन्धस्य सिद्धिः=ज्ञप्तिः संभवतीत्यर्थः ॥ ४४ ॥

**ननु** शब्दार्थसंबन्धस्य स्वाभाविकत्वे शब्दराशिवेदा अपि स्वाभाविकाः स्युस्तत्राह—

**" ननित्यत्वं वेदानां कार्य्यत्वश्रुतेः " ॥ ४५ ॥**

वेदानां=ऋग्यजुःसामाथर्वणां चतुर्णां वेदानां नित्यत्वं=स्वाभाविकत्वं न=नभवति । कुतः ? कार्य्यत्वश्रुतेः=[1]**'तस्माद्यज्ञात्सर्वहुतऋचः सामानि जज्ञिरे । छन्दांसि जज्ञिरे तस्माद्यजुस्तस्मादजायत'** इति तेषां कार्य्यत्वस्य=ईश्वरजन्यत्वस्य श्रुतेः=श्रवणादित्यर्थः ॥ ४५ ॥

**ननु** वेदानां कार्य्यत्वे भारतादिवत्पुरुषप्रणीतत्वमेवकिन्नस्यात् ? तत्राह—

**" न पौरुषेयत्वं, तत्कर्तुः पुरुषस्याभावात् " ॥ ४६ ॥**

वेदानामित्यनुवर्तते । वेदानां पौरुषेयत्वं=कार्य्यत्वेऽपि जीवकर्तृकत्वं

---

१ यजु.—२ । ३१ मं. ९ ।

न=न संभवति। कुतः ? तत्कर्तुः=वेदकर्तुः पुरुषस्य=जीवस्याभावात्=अनुपलम्भादित्यर्थः ॥ ४६ ॥

ननु प्राचीनतमेषु धर्ममन्दिरेषु व्यभिचारात्कर्तुरनुपलम्भो न वेदानां जीवकर्तृकत्वं प्रतिक्षेप्तुमर्हति । कथं तेषां तदसंभवस्तत्राह—

"मुक्तामुक्तयोरयोग्यत्वात्" ॥ ४७ ॥

मुक्तामुक्तयोः=मुक्तस्य जीवस्य निःसङ्गत्वेनामुक्तस्य बद्धस्य सर्वज्ञत्वाभावेनायोग्यत्वात्=वेदकरणे योग्यत्वाभावादित्यर्थः ॥ ४७ ॥

ननु येषां कर्ता नोपलभ्यते जीवाश्च न तद्योग्यास्तेषामपौरुषेयत्वान्नित्यत्वं किन्नस्यात्, तत्राह—

"नापौरुषेयत्वान्नित्यत्वमंकुरादिवत्" ॥ ४८ ॥

अपौरुषेयत्वात्=पुरुषो जीवस्तत्कर्तृकत्वाभावान्नित्यत्वं=वेदानां नित्यत्वं न=न भवति, तत्रोदाहरणमङ्कुरादिवत् यथाऽङ्कुरादीनां जीवकर्तृकत्वाभावेऽपि न नित्यत्वमित्यर्थः ।

यदपौरुषेयं तन्नित्यमिति नियमो नास्ति, अङ्कुरादौ व्यभिचारादिति भावः ॥ ४८ ॥

नन्वङ्कुरादीनां कार्य्यत्वाज्जीवकर्तृकत्वमनुमेयं, तत्राह—

"तेषामपि तद्योगे दृष्टबाधादिप्रसक्तिः" ॥ ४९ ॥

तेषामपि=सस्यादिवदङ्कुरादीनामपितद्योगे=तस्यजीवकर्तृकत्वस्य योगे=प्रयोगे दृष्टबाधादिप्रसक्तिः=आदिपदेनादृष्टकल्पनं गृह्यते । दृष्टबाधस्यादृष्टकल्पनस्य च प्रसक्तिः स्यादित्यर्थः ॥ ४९ ॥

नन्वेवं तर्हि जीवकर्तृकमेतदीश्वरकर्तृकश्चेदमिति कथं विज्ञेयं ? तत्राह—

"यस्मिन्नदृष्टेऽपि कृतबुद्धिरुपजायते तत्पौरुषेयम्" ॥५०॥

अदृष्टेऽपि=दृष्टिगोचराभावेऽपि तत्कर्तरि यस्मिन्=यद्वस्तुनि कृतबुद्धिः=जीवेन कृतमित्येषा धीरुपजायते=समुत्पद्यते । तत्=तद्वस्तु पौरुषेयं=जीवकर्तृक—मित्यर्थः ।

अत्र तु वेदांकुरादौ जीवकर्तृकत्वबुद्धिर्नोपजायते अयोग्यत्वात् । तत्रेश्वरः कर्तेति मन्तव्यम् ॥ ५० ॥

**ननु** वेदानामीश्वरोक्तत्वे परतः प्रामाण्यं किं न स्यात्, तत्राह—

**"निजशक्त्यभिव्यक्तेः स्वतः प्रामाण्यम्" ॥ ५१ ॥**

निजशक्त्याभिव्यक्तेः=शब्दार्थसम्बन्धलक्षणया स्वाभाविक्या शक्त्याऽभिव्यक्तेः=प्रतिसर्गं भगवतो जगदधिपतेः प्रादुर्भावाद्वेदानां स्वतः प्रामाण्यं=स्वार्थसिद्धौ प्रमाणान्तरनिरपेक्षप्रमात्वमित्यर्थः ।

ईश्वरोच्चरितत्वेऽप्यनादित्वान्निजया शक्त्या प्रामाण्यं स्वतःप्रामाण्यं रूपविषये रवेरिवेति सांख्या इति भावः ॥ ५१ ॥

**ननु** शब्दप्रमाणविषयं सांख्यानामीदृशं मतमस्तु । भ्रान्तिविषये पुनस्तेषां कीदृशं मतमित्याकांक्षायामात्ममतं दिदर्शयिषुरादौ परमतं निराकुर्वन्नाह—

**"नासतः ख्यानं नृशृङ्गवत्" ॥ ५२ ॥**

असतः=शुक्तिशकलादौ नितान्तालीकस्य रजतादेः ख्यानम्=इदं रजतमित्यादौ भ्रान्तिज्ञाने विषयतया भानं न=नो पपद्यते।अयोग्यत्वात् । नृशृङ्गवत=यथा नितान्तासतोनृशृङ्गस्य क्वचिदपि ख्यानं नेत्यर्थः ॥ ५२ ॥

**नन्वसतो** रजतादेः ख्यानं मास्तु विज्ञानात्मनः सत एव ख्यानमस्तु, तत्राह—

**"न सतो बाधदर्शनात्" ॥ ५३ ॥**

ख्यानमित्यनुवर्तते । सतः=शुक्तिशकलादौ विज्ञानात्मनः सद्रजतादेः ख्यानम्=इदं रजतमित्यादौ भ्रान्तिज्ञाने विषयतया भानं न=नोपपद्यते । कुतः? बाधदर्शनात=नेदं रजतमित्यादिना तद्बाधस्य दर्शनादित्यर्थः ।

**रजतस्य** विज्ञानात्मकत्वे शुक्तिशकलादिवद् बाधो न स्यादिति भावः ॥ ५३ ॥

अनिर्वचनीयवादिनं प्रत्याह—

"नानिर्वचनीयस्य तदभावात्" ॥ ५४ ॥

ख्यानमित्यनुवर्तते । अनिर्वचनीयस्य=सदसद्विलक्षणस्य रजतादेः ख्यानं=भ्रान्तिज्ञाने भानं न=नोपपद्यते। कुतः ? तदभावात्=तादृक्पदार्थस्यैवाभावादित्यर्थः ॥ ५४ ॥

अन्यथाख्यातिवादं निरस्यति ।

"नान्यथाख्यातिः स्ववचो व्याघातात्" ॥ ५५ ॥

अन्यथाख्यातिः=इदंरजतमित्यादौ पुरोवर्तिनः शुक्तिशकलादेरन्यथा=रजताद्यात्मना ख्यातिः=ख्यानं न=समीचीनं न । स्ववचोव्याघातात्=ज्ञेयानुरूपं ज्ञानम्' इति स्ववचसो व्याहतिप्रसंगादित्यर्थः॥ ५५ ॥

आत्ममतमाह—

"सदसत्ख्यातिर्बाधाबाधात्" ॥ ५६ ॥

सदसत्ख्यातिः= सांख्यानामस्माकं इदंादौ सतः पुरोवर्तिनि चासतो रजतादेः पुरोवर्तिसामान्यांशेनेदमाऽसंसर्गाग्रहात्ख्यातिः=इदं रजतमित्यादौ भ्रान्तिज्ञाने विषयतया भानम् । कुतः ? बाधाबाधात्=तस्य रजतादेः संसर्गतः पुरोवर्तिनि बाधेऽपि स्वरूपतोऽबाधात्=बाधाभावादित्यर्थः ।

अख्यातिवादिनस्तावत्सांख्या इदं रजतमित्यादौ सर्वत्र ज्ञानद्वयमाचक्षते। तिमिरादिना प्रमाणदोषेण पुरोवर्तिविशेष्यांशस्याग्रहात्सामान्यांशविषयमिदमाकारं सन्निकर्षमात्रजन्यमेकं ज्ञानम् । लोभादिप्रमातृदोषसमीचीनसादृश्यादिदोषोद्बुद्धरजतादिसंस्कारमात्रजन्यश्च सद्रजतादिविषयं स्मृत्यात्मकं द्वितीयम्।तयोश्चद्वयोर्ज्ञानयोः प्रमाणादिदोषवशेन स्वरूपतो विषयतश्चासंसर्गाग्रहलक्षणो 'मयि भिन्नविषयं ज्ञानद्वयं जातम्' इति विवेकप्रतिद्वन्द्वी योऽयमेकं ज्ञानमित्यविवेकः, स एव तेषां तद्रूपाप्रतिष्ठितत्वाद् भ्रमो विपर्य्ययो मिथ्या-

ज्ञानं, नापरः कश्चनपदार्थः । अत एव रजतादिज्ञानस्य विषयो रजतादिर्देशान्तरे सन्नपि न पुरोवर्तिनि सन् । तेन नेदं रजतमित्यादिना बाधकज्ञानेन देशान्तरे वर्तमानस्य तस्य स्वरूपतोबाधासंभवात्पुरोवर्तिनि संसर्गतोबाध इति भावः ।

तत्रासत्सदनिर्वचनीयेति ख्यातित्रयं बाह्यानाम् अन्यथाख्यातिः सदसत्ख्यातिश्चेति द्वयं वैदिकानाम् । बाधश्च प्रतिपन्नधर्मिणि निषेधबुद्धिविषयत्वमिति विवेकः ॥ ५६ ॥

एवं भ्रान्तिविषये स्वमतं प्रदर्श्य शब्दविषयं तत्प्रदर्शयितुमादौ परेण संमतं शब्दस्य स्फोटात्मकत्वं प्रतिषेधति ।

**"प्रतीत्यप्रतीतिभ्यां न स्फोटात्मकः शब्दः" ॥५७॥**

शब्दः=गौरित्यादिशब्दः स्फोटात्मकः= हस्तपादाद्यवयवेभ्यो व्यतिरिक्तोऽखण्डैकमूर्तिरवयवीव गकारादिवर्णेभ्यो व्यतिरिक्तोऽखण्डैकमूर्तिरर्थप्रत्ययहेतुः पदादिसंज्ञाभाग् गौरित्यादिशब्दविशेषः स्फोटस्तदात्मकः=तत्स्वरूपो न=न भवति।कुतः? प्रतीत्यप्रतीतिभ्यां=गकारादिवर्णानां प्रतीतेस्तद्व्यतिरिक्तस्य स्फोटस्य चाप्रतीतेरित्यर्थः ॥ ५७ ॥

ननु शब्दस्य स्फोटात्मकत्वाभावेऽपि नित्यत्वं किं नस्यात् ? तत्राह—

**"न शब्दनित्यत्वं कार्य्यताप्रतीतेः" ॥ ५८ ॥**

शब्दनित्यत्वं=शब्दस्य=गकारादिवर्णस्य नित्यत्वम्=उपत्तिविनाशशून्यत्वं न=नभवति। कुतः? कार्य्यताप्रतीतेः=उत्पन्नो गकार इत्यादिना तदुत्पादकताप्रतीतेरित्यर्थः ॥ ५८ ॥

शब्दनित्यत्ववादी शंकते ।

**"पूर्वसिद्धसत्त्वस्याभिव्यक्तिर्दीपेनेव घटस्य" ॥५९॥**

ननु न कारणव्यापारेण शब्दस्योत्पत्तिर्भवति,येन तस्य नित्यत्वं न स्यात्। किंतु पूर्वसिद्धसत्त्वस्य=कारणव्यापारात्पूर्वं सिद्धं सत्त्वं यस्य; तस्याभिव्य-

क्तिः= प्रादुर्भूतिर्दीपेनेवघटस्य=यथा पूर्वसिद्धसत्त्वस्यघटस्य दीपेनाभिव्यक्तिरित्यर्थः ।

उत्पन्नो गकारो नष्टः ककार इत्यादिप्रतीतिस्तु ध्वन्युपाधिकृता न स्वतः। कारणव्यापारेण ध्वनेरेवोत्पत्तिविनाशयोरभ्युपगमादिति भावः॥५८॥

परिहरति ।

" सत्कार्य्यसिद्धान्तश्चेत्सिद्धसाधनम् " ॥ ६० ॥

अभिव्यक्तया नित्यत्वं साधयतस्ते कः सिद्धान्तः। सत्कार्य्यसिद्धान्तश्चेत्= कारणव्यापारात्पूर्वं सतः कार्य्यस्य ,तेनाभिव्यक्तिरिति ते सिद्धान्तश्चेत् तदा सिद्धसाधनम=अस्माकं सिद्धस्यैवैतत्साधनमित्यर्थः ।

तादृशनित्यत्वस्यास्माकं कार्य्यमात्रे सिद्धत्वादिति भावः ॥ ६० ॥

आत्माद्वैतवादं प्रतिक्षिपति ।

" नाद्वैतमात्मनो लिंगात्तद्भेदप्रतीतिः " ॥ ६१ ॥

आत्मनः =पुरुषात्मनोऽद्वैतम्=ऐक्यं न=न संभवति । कुतः? लिङ्गात्= सुखदुःखजरामरणादिलिंगात् तद्भेदप्रतीतेः=तस्यपुरुपात्मनोभेदस्य सिद्धेरित्यर्थः ।

आत्मैक्ये प्रतिपुरुषं सुखदुःखादिभेदो न स्यादिति भावः ॥ ६१ ॥

ननु मा भूत्सजातीयाद्वैतं, विजातीयाद्वैतं भविष्यति, तत्राह—

" नानात्मनाऽपि, प्रत्यक्षबाधात् " ॥ ६२ ॥

अद्वैतमात्मन इत्यनुवर्तते।आत्मनोऽनात्मनापि =भोग्येन जगताऽपि नाद्वैतम् =नात्यन्ताभेदः संभवति । कुतः ? प्रत्यक्षबाधात् =भेदग्राहकप्रत्यक्षेण बाधादित्यर्थः ॥ ६२ ॥

नन्वस्तु तर्हि समुच्चिताभ्यामात्मानात्मभ्यामद्वैतं,तत्राह—

" नोभाभ्यां तेनैव " ॥ ६३ ॥

अद्वैतमात्मन इत्यनुवर्तते । नोभाभ्यां=न समुच्चिताभ्यामात्मानात्मभ्यामप्यात्मनोऽद्वैतं संभवति । कुतः ? तेनैव=पूर्वोक्तहेतुद्वयेनैवेत्यर्थः ॥ ६३ ॥

नन्वेवमद्वैतप्रतिपादकश्रुत्या विरोधः स्यात्, तत्राह—

" अन्यपरत्वमविवेकानां तत्र " ॥ ६४ ॥

तत्र=अद्वैतप्रतिपादकश्रुतावन्यपरत्वं=द्वैतादन्यदद्वैतंतत्परत्वम्=आत्माद्वैतप्रतिपादिकत्वमविवेकानां=शास्त्रव्युत्पत्तिशून्यानांप्रतिभाति न जातविवेकानामिति न विरोध इत्यर्थः।

क्वचित्कार्य्यकारणयोरभेदविवक्षया क्वचिज्जात्मतयैक्यप्रतिपादिकत्वमद्वैतश्रुतीनामिति भावः ॥ ६४ ॥

नन्वात्मोपादानकं जगदात्माभिन्नं किं न स्यान्मृदुपादानकस्य मृदभिन्नत्वदर्शनात्, तत्राह—

" नात्माऽविद्या नोभयं जगदुपादानकारणं निःसङ्गत्वात् " ॥ ६५ ॥

आत्मोपादानकं जगदिति कोऽभिप्रायः? किमात्ममात्रोपादानकम्, उतात्माश्रिताविद्योपादानकम्? आहोस्विदात्माविद्योभयोपादानकं? तत्रात्मा कूटस्थत्वादविद्याकल्पितत्वादुभयम्=आत्माऽविद्या चेति द्वयं निःसङ्गत्वात्=परस्परसंगाभावाद् जगदुपादानकारणं न संभवतीत्यर्थः।

तदभावे कुतस्तदभेद इति भावः ॥ ६५ ॥

आत्माऽद्वैतं निराकृत्य सच्चिदानन्दस्वरूप ईश्वरः,सच्चित्स्वरूपो जीवः, सती च केवला प्रकृतिरित्यात्ममतं दृढीकर्तुं पराभिमतं जीवात्मनः पुरुषस्य तावदानन्दरूपत्वं निराचष्टे।

" नैकस्यानन्दचिद्रूपत्वे द्वयोर्भेदात् " ॥ ६६ ॥

एकस्य=प्रतिशरीरमेकस्य=जीवात्मनः पुरुषस्येतियावदानन्दचिद्रूपत्वे=सुखमानन्दो ज्ञानं चित्तदुभयस्वरूपत्वंन=नभवति। कुतः? द्वयोः=सुखज्ञानयो रुभयो र्भेदात्=भेदेनावगमादित्यर्थः।

यथाऽऽत्मनोज्ञानं स्वरूपं, तथा चेदानन्दोऽपि । तदा तयोर्भेदेनावगमो न स्यात् । तदभिन्नाभिन्नस्य तदभिन्नत्वानियमात् । भवति च दुःखानुभववेळायां सुखाननुभवेन तद्भेदावगमः । ततो भवति प्रतिपत्तिः "ज्ञानवन्नात्मनः स्वरूपमानन्द" इति भावः ॥ ६६ ॥

ननु पुरुषस्यानन्दरूपत्वाभावे कदाचिदस्यात्मनिजायमानः "सुखमहमस्मीति सुखप्रत्ययो नोपपद्येत-तत्राऽऽह

**" दुःखनिवृत्तेर्गौणः " ॥ ६७ ॥**

दुःखनिवृत्तेः=कस्यचित्तीव्रतरदुःखस्य निवृत्तेर्गौणः=जायमानःसुखप्रत्ययो गौणो=भाक्तो मन्तव्य इत्यर्थः ।

दुःखाभावेहि तदा सुखं प्रत्येतीति भावः ॥ ६७ ॥

ननु कथन्तर्हि मुक्त्यवस्थायामात्मनः केचिदानन्दरूपतामाचक्षते तत्राह–

**"विमुक्तिप्रशंसा मन्दानाम्" ॥ ६८ ॥**

मन्दानां=कर्तरिषष्ठीयम् । अत्र वैदिकसिद्धान्तानभिज्ञा मन्दास्तेषां सा विमुक्तिप्रशंसा=श्रुतिस्मृतिविरुद्धा मुक्त्यवस्थायामानन्दरूपत्वेनात्मनः स्तुतिरित्यर्थः ।

**मनोवैभवं** निराकरोति ।

**"न व्यापकत्वं मनसः करणत्वादिन्द्रियत्वाद्वा" ॥ ६९ ॥**

मनसो व्यापकत्वं=विभुत्वं न=न सम्भवति । कुतः ? करणत्वात्=साक्षात् क्रियासाधकत्वाद्दास्यादिवदिन्द्रियत्वाद्वा चक्षुरादिवदित्यर्थः ॥ ६९ ॥

किञ्च–

**" सक्रियत्वाद्गतिश्रुतेः " ॥ ७० ॥**

न व्यापकत्वं मनसइत्यनुवर्तते । गतिश्रुतेः = मनःसहकृतस्यात्मनो लोकान्तरे गमनश्रुतेर्मनसःसक्रियत्वात्=सक्रियत्वावगमान्न तस्य व्यापकत्वं सम्भवतीत्यर्थः ॥ ७० ॥

ननु मास्तु मनसो व्यापकत्वम् । अणुत्वं भविष्यति, तत्राह–

**"न निर्भागत्वं तद्योगाद्‌ घटवत्" ॥ ७१ ॥**

मनस इत्यनुवर्तते। मनसो निर्भागत्वं=भागोऽवयवस्तद्रहितत्वं=निरवयवत्वम्=अणुत्वमिति यावन्न=न संभवति। कुतः ? तद्योगात्=भागयोगस्तद्योगस्तस्मात्=सावयवत्वात् । घटवत्=यथा घटस्यसावयवत्वान्नाणुत्वमित्यर्थः ॥ ७१ ॥

ननु मनसो नित्यत्वात्कथं सावयवत्वं,तत्राह—

**"प्रकृतिपुरुषयोरन्यत्सर्वमनित्यम्" ॥ ७२ ॥**

जीवेश्वरोभयपरोऽत्र पुरुषशब्दः, सांख्यानां पदार्थत्रयस्यैव नित्यत्वाभ्युपगमात, स्पष्टमन्यत् ।

मनसोऽपि प्रकृतिपुरुषान्यत्वान्न नित्यत्वमिति भावः ॥ ७२ ॥

नन्वीश्वरस्य भागयोगाभावेऽपि पुम्प्रकृत्योर्भागयोगः किं न स्यात्, तत्राह—

**"न भागलाभो भोगिनो निर्भागत्वश्रुतेः" ॥ ७३ ॥**

भोगिनः=जीवात्मनः पुरुषस्य प्रधानस्य च भागलाभः=भागयोगः=सावयवत्वमिति यावन्न=न संभवति। कुतः ? निर्भागत्वश्रुतेः="**अजो नित्यः शाश्वतोऽयम्**"[१]"**अजामेकाम्**"[२]इति निरवयवत्वस्य श्रवणादित्यर्थः ॥ ७३ ॥

परस्य मुक्तिं निराकुरुते ।

**"नानन्दाभिव्यक्तिर्मुक्तिर्निर्धर्मत्वात्" ॥ ७४ ॥**

आनन्दाभिव्यक्तिः=संसारावस्थायामनभिव्यक्तस्यानन्दस्याभिव्यक्तिः=मोक्षावस्थायां प्रादुर्भूतिर्मुक्तिः=कैवल्यं न=न संभवति। कुतः ? निर्धर्मत्वात्=आत्मनस्तादृग्धर्मानाश्रयत्वाभ्युपगमादित्यर्थः ॥ ७४ ॥

नन्वस्तु तर्ह्यशेषविशेषगुणोच्छित्तिर्मुक्तिस्तत्राह—

**" न विशेषगुणोच्छित्तिस्तद्वत् " ॥ ७५ ॥**

---

१ कठो०अ.१—वल्ली. २—१८ । २ श्वे०अ० ४ । मं० ५ ।

मुक्तिरित्यनुवर्तते । तद्वत्=आनन्दाभिव्यक्तिवद् विशेषगुणोच्छित्तिः= आत्ममनःसंयोगेनजातानांज्ञानादिविशेषगुणानामुच्छित्तिः=निवृत्तिरपि मुक्ति-र्न=न संभवतीत्यर्थः ।

मनःसंयोगसत्वेतदुच्छित्तेरसंभवादितिभावः ॥ ७५ ॥

नन्वस्तु तर्हि निरन्तरोर्ध्वगतिरेव मुक्तिस्तत्राह—

**" न विशेषगतिर्निष्क्रियस्य " ॥ ७६ ॥**

मुक्तिरित्यनुवर्तते । विशेषगतिः=लोकसिद्धगतिव्यावर्तनाय विशेषपदम् । निरन्तरोर्ध्वगतिरपि मुक्तिर्न । कुतः ? निष्क्रियस्य=स्वतःक्रियारहितस्य गत्यसंभवादित्यर्थः ॥ ७६ ॥

जैनमुक्तिं दूषयित्वा बौद्धमुक्तिं दूषयति ।

**"नाकारोपरागोच्छित्तिः क्षणिकत्वादिदोषात्" ॥ ७७ ॥**

मुक्तिरित्यनुवर्तते । आकारोपरागोच्छित्तिः=आत्मनि क्षणिकविज्ञाने यो विषयाकाराणामुपरागः=तद्वासनालक्षणः संबन्धविशेषस्तस्योच्छित्तिः=उच्छेदोऽपि मुक्तिर्न=न संभवति । कुतः ? क्षणिकत्वादिदोषात्=आदिपदेन तदुच्छेदोपायाभावस्यसंग्रहः । क्षणिकत्वादिदोषात्तस्याः पुरुषार्थत्वानु-पपत्तेरित्यर्थः ।

सर्वस्य क्षणिकत्वात्का मुक्तिः ? कस्य वा मुक्तिः स्यादिति भावः ॥ ७७ ॥

नन्वस्तु तर्हि सर्वोच्छित्तिर्मुक्तिस्तत्राह—

**" न सर्वोच्छित्तिरपुरुषार्थत्वादिदोषात् " ॥ ७८ ॥**

मुक्तिरित्यनुवर्तते। सर्वोच्छित्तिः=सर्वस्य=विषयोपरागस्य तदाश्रयक्षणिक-विज्ञानात्मनोजीवस्यचोच्छित्तिरपि मुक्तिर्न=न संभवति । कुतः ? अपुरुषार्थ त्वादिदोषात्=आदिपदेनात्मोच्छेदासंभवदोषस्यसंग्रहः, पुरुषार्थत्वाभावादि दोषप्रसंगादित्यर्थः ॥ ७८ ॥

शून्यवादिनं बौद्धं निरस्यति ।

"एवं शून्यमपि" ॥ ७९ ॥

मुक्तिर्नेत्यनुवर्तते । एवं=यथाऽपुरुषार्थत्वादिदोषात् सर्वोच्छित्तिर्न मुक्तिरेवं शून्यमपि=ज्ञानज्ञेयात्मकनिखिलप्रपञ्चनाशोऽपि मुक्तिर्न संभवतीत्यर्थः ॥ ७९ ॥

देशविशेषादिलाभो मुक्तिरिति मतं व्युदस्यति ।

"संयोगाश्च वियोगान्ता इति न देशादिलाभोऽपि"॥८०॥

मुक्तिरित्यनुवर्तते।च=यस्मात्संयोगाः=सर्वे प्राप्तिलक्षणाः संबन्धा वियोगान्ताः=विभागसीमान इति=अस्माद्देशादिलाभोऽपि=प्रकृष्टदेशधनाङ्गनादिप्राप्तिरपि मुक्तिर्न=न संभवतीत्यर्थः ॥ ८० ॥

जीवस्य परमात्मयोगो मुक्तिरिति मतं दूषयति ।

"न भागियोगो भागस्य" ॥ ८१ ॥

संयोगाश्च वियोगान्ता इत्यपि मुक्तिरित्यनुवर्तते । भागस्य=ईश्वरांशस्य जीवस्य भागियोगः=ईश्वरयोगोऽपि मुक्तिर्न संभवति।संयोगानां वियोगान्तत्वनिर्णयादित्यर्थः ।

निरंशस्य वास्तवांशासंभवात्, भावेवासावयवत्वप्रसंगादौपाधिकस्य च प्रत्याख्यानाच्चेत्यपि द्रष्टव्यम् ॥ ८१ ॥

नन्वस्तु तर्ह्यणिमादियोगो मुक्तिस्तत्राह—

"नाणिमादियोगोऽप्यवश्यंभावित्वात्तदुच्छित्तेरितरयोगवत्" ॥ ८२ ॥

मुक्तिरित्यनुवर्तते । अणिमादियोगोऽपि=अणिमा, लघिमा, महिमा, प्राप्तिः, प्राकाम्यं, वशित्वम्, ईशितृत्वम्, यत्र कामावसायित्वमित्यणिमाद्यष्टविधैश्वर्यप्राप्तिरपि मुक्तिर्न।कुतः? तदुच्छित्तेरवश्यंभावित्वात्=तस्याणिमादियोगस्योच्छित्तेः=वियोगस्यावश्यंभावित्वात्=आवश्यकत्वात् इतरयोगवत्=यथैश्वर्यान्तरयोगस्योच्छित्तेरवश्यंभावित्वमित्यर्थः ॥ ८२ ॥

नन्विन्द्रादिपदयोगस्तर्हि मुक्तिरस्तु, तत्राह—

"नेन्द्रादिपदयोगोऽपि तद्वत्" ॥ ८३ ॥

मुक्तिरित्यनुवर्तते । तद्वत्=अणिमादिप्राप्तिवत्तदुच्छित्तेरवश्यंभावित्वादि- न्द्रादिपदयोगोऽपि=इन्द्रबृहस्पतिप्रजापत्यादिपदप्राप्तिरपि मुक्तिर्नेत्यर्थः ८३ ॥

ननु 'घ्राणरसनचक्षुस्त्वक्श्रोत्राणीन्द्रियाणि भूतेभ्यः'[1] इति नैयायिका वैशेषिकाश्च मन्यन्ते । सांख्यानामत्र कः सिद्धान्तः ? तत्राह—

"न भूतप्रकृतित्वमिन्द्रियाणामाहङ्कारिकत्वश्रुतेः" ॥८४॥

सांख्यानामस्माकमिन्द्रियाणां=घ्राणादीनामिन्द्रियाणांभूतप्रकृतित्वं=भूतो पादानकत्वं न । किन्त्वहंकारोपादानकत्वम् । कुतः ? आहंकारिकत्वश्रुतेः=ते षामहंकारकार्यत्वश्रवणादित्यर्थः ।

नैयायिका वैशेषिकास्तु यस्मादिन्द्रियाणां भौतिकत्वमाहुस्तत्स्वयमग्रे वक्ष्यति ॥ ८४ ॥

नन्वेवं तदुक्तपदार्थनियमोऽपि भवतां न स्यात्, तत्राह—

"न षट्पदार्थनियमस्तद्बोधान्मुक्तिः" ॥ ८५ ॥

षट्पदार्थनियमः=द्रव्यगुणकर्मसामान्यविशेषसमवायानां षण्णां पदार्थानां नियमः=नियतिरस्माकं सांख्यानां न=नास्ति, न वा तद्बोधात्=तेषां षण्णां पदार्थानांबोधात्=विवेकप्रत्ययान्मुक्तिः=त्रिविधदुःखात्यन्तनिवृत्तिलक्षणंकैव ल्यमित्यस्माकं नियमः । किन्तु पञ्चविंशतितत्त्वानां बोधादित्यर्थः ॥८५॥

अतिदिशति ।

"षोडशादिष्वप्येवम्" ॥ ८६ ॥

एवं=यथा वैशेषिकोक्तेषु षट्सु पदार्थेषु तद्बोधान्मुक्तौ च सांख्यानाम स्माकं नियमो न, तथा षोडशादिष्वपि=नैयायिकादिप्रोक्तेषु-प्रमाण-प्रमेयसं- शय-प्रयोजन-दृष्टान्त-सिद्धान्ताऽवयव-तर्क-निर्णय,वाद-जल्प-वितण्डा-हेत्वा

---

१ न्याय.अ. १–आ. १–सूत्रं १२ ।

भास-च्छल-जाति-निग्रहस्थानादिषुपदार्थेष्वपि, तद्बोधान्मुक्तौ च बोद्धव्य इत्यर्थः ।

आदिशब्देन मीमांसकोक्ताः पदार्थाः संगृह्यन्ते ॥ ८६ ॥

वैशेषिकैकदेशिप्रोक्तत्रसरेणुनित्यत्वं प्रत्याह—

" नाणुनित्यता, तत्कार्य्यत्वश्रुतेः " ॥ ८७ ॥

अणुनित्यता=अणूनां=परमाणुनाम्नाऽभ्युपगतानांत्रसरेणूनां नित्यता=नित्यत्वं न=न संभवति । कुतः ? तत्कार्य्यत्वश्रुतेः=तेषां प्रकृतिकार्य्यत्वस्य श्रवणादित्यर्थः ।

इदमत्र बोध्यम् । यद्यपि सांख्या अप्येतादृक्परमाणून् मन्यन्ते तथापि तेषां वैशेषिकैकदेशिवन्न ते नित्याः । किन्तु पञ्चतन्मात्रकार्य्यभूता इति ॥ ८७ ॥

ननु निरवयवाः परमाणवः कथमनित्याः स्युः ? तत्राह—

" न निर्भागत्वं कार्य्यत्वात् " ॥ ८८ ॥

निर्भागत्वं=निरवयवत्वं न=भवदभ्युपगतपरमाणूनां न संभवति।कुतः ? कार्य्यत्वात्=जन्यत्वाद् घटवदित्यर्थः ॥ ८८ ॥

केवलरूपनिबन्धनं बहिरिन्द्रियैर्द्रव्यप्रत्यक्षनियमं निरस्यति ।

" न रूपनिबन्धनात्प्रत्यक्षनियमः " ॥ ८९ ॥

रूपनिबन्धनात्=रूपमात्रनिमित्तात्प्रत्यक्षनियमः=बाह्यद्रव्यप्रत्यक्षस्य नियमो न=न भवति । कुतः ? द्व्यणुकादेरपिप्रत्यक्षत्वप्रसङ्गादित्यर्थः ॥८९॥

" अणुमहद्दीर्घं ह्रस्वमिति चतुर्विधं परिमाणमिति वैशेषिकोक्तं परिमाणचातुर्विध्यं द्वैविध्येनचरितार्थयन्नाह ।

" न परिमाणचातुर्विध्यं द्वाभ्यां तद्योगात् " ॥९०॥

परिमाणचातुर्विध्यम्=अणुमहद्दीर्घं ह्रस्वमिति परिमाणस्य चतुःप्रकारत्वं न=युक्तं न । किन्तु द्विप्रकारत्वम् । कुतः ? द्वाभ्यां तद्योगात्=अणुमहत्परिमाणाभ्यामेव तस्य परिमाणचातुर्विध्यस्य सर्वत्र प्रतिपादनसंभवादित्यर्थः ।

मध्यादिवद्ध्रस्वदीर्घयोरपि महत्परिमाणावान्तरभेदत्वेनैवोपपत्तेरिति भावः ।

तत्राणुपरिमाणमाकाशस्य कारणं शब्दतन्मात्रलक्षणंगुणविशेषं वर्जयित्वा भूतेन्द्रियाणां मूलकारणेषु सत्त्वादिगुणेषु मन्तव्यमिति भाष्यम् ॥ ९० ॥

इदानीं स्वमतेन प्रत्यभिज्ञायाः सामान्यविषयत्वमुपपादयिष्यन् तदपलापिनं बौद्धं प्रत्याचक्षाण आह—

" अनित्यत्वेऽपि स्थिरतायोगात्प्रत्यभिज्ञानं सामान्यस्य " ॥ ९१ ॥

प्रत्यभिज्ञानं=स एवायमित्यादिप्रत्यभिज्ञानं सामान्यस्य=विषयत्वं षष्ठ्यर्थः । अनुगतधर्मविशेषःसामान्यं, तद्विषयमवगन्तव्यम् । कुतः ? अनित्यत्वेऽपिस्थिरतायोगात्=तस्यप्रकृतिपुरुषाभ्यामन्यत्वेन नित्यत्वाभावेऽपि चिरस्थायित्वाभ्युपगमादित्यर्थः ॥ ९१ ॥

नन्वस्तु सामान्यविषयं प्रत्यभिज्ञानं, किं तेन ? तत्राह—

" न तदपलापस्तस्मात् " ॥ ९२ ॥

तस्मात्=प्रत्यभिज्ञाविषयत्वात्तदपलापः=तस्यसामान्यस्यापह्नवो न=न संभवतीत्यर्थः ॥ ९२ ॥

नन्वतद्व्यावृत्तिरूपमेव सामान्यं न किञ्चित्तत्त्वान्तरं, तत्राह—

" नान्यनिवृत्तिरूपत्वं भावप्रतीतेः " ॥९३ ॥

सामान्यस्येत्यनुवर्तते । घटत्वादिसामान्यस्यान्यनिवृत्तिरूपत्वं=घटादिभ्योऽन्ये पटादयस्तदभावस्वरूपत्वं न=न संभवति । कुतः ? भावप्रतीतेः=तस्य " स एवायं घट " इति भावत्वेन ज्ञप्तेरित्यर्थः ॥ ९३ ॥

नन्वस्तु तर्हि सादृश्यनिबन्धनमेवैतत्प्रत्यभिज्ञानं न सामान्यनिबन्धनं, तत्राह—

" न तत्त्वान्तरं सादृश्यं, प्रत्यक्षोपलब्धेः " ॥९४ ॥

सादृश्यं=भवदभ्युपगतं सादृश्यं तत्त्वान्तरं=भूयोऽवयवसामान्यातिरिक्तं पदार्थान्तरं न=न भवति । कुतः? प्रत्यक्षोपलब्धेः=गोसदृशो गवय इत्यादिवत्सएवायं घट इत्यादौ सर्वत्र भूयोऽवयवसामान्यस्यैव प्रत्यक्षेणोपलब्धेरित्यर्थः ॥ ९४ ॥

ननु सापेक्षप्रतीतिविषयभूतं सादृश्यं कथं सामान्यतोऽतिरिक्तं तत्त्वान्तरं न स्यात्तत्राह–

**" निजशक्त्यभिव्यक्तिर्वा वैशिष्ट्यात्तदुपलब्धेः " ॥ ९५ ॥**

सादृश्यमित्यनुवर्तते । वा=अथवा निजशक्त्यभिव्यक्तिः=वस्त्वन्तरदर्शनसापेक्षा वस्तुनः स्वाभाविक्याः शक्तेरभिव्यक्तिः=अभिव्यक्ता स्वाभाविकी शक्तिरितियावत्सादृश्यं मन्तव्यम् न तत्त्वान्तरम् । कुतः वैशिष्ट्यात्तदुपलब्धेः= तादृशशक्तिसंबन्धोऽत्र वैशिष्ट्यम् । तस्मात्तस्य सादृश्यस्य प्रतीतेरित्यर्थः ।

तत्तत्पदार्थनिष्ठस्तादृक्शक्तिभेद एव सर्वत्र सादृश्यप्रतीतिविषयो न तत्त्वान्तरमिति भावः ॥ ९५ ॥

ननु सादृश्यस्य शक्तिरूपत्वकल्पनं न युक्तम् । संज्ञासंज्ञिसंबन्धग्रहहेतुत्वेन पृथक् तत्सिद्धेस्तत्राह–

**" न संज्ञासंज्ञिसंबन्धोऽपि " ॥ ९६ ॥**

वैशिष्ट्यात्तदुपलब्धेरित्यनुवर्तते।संज्ञासंज्ञिसंबन्धोऽपि=विषयेण विषयिणं लक्षयति।गवयादिशब्दः संज्ञा, तदर्थो व्यक्तिविशेषः संज्ञी,तत्संबन्धग्रहोऽपि न=सादृश्यहेतुको न। कुतः? वैशिष्ट्यात्तदुपलब्धेः=आप्तोपदेशादिसंबन्धोऽत्र वैशिष्ट्यम् । तस्मात्तस्य संबन्धस्य प्रतीतेरित्यर्थः ॥ ९६ ॥

संप्रति दिक्कालादीनां संबन्धो नित्य इति मतमपाकरोति ।

**" न संबन्धनित्यतोभयानित्यत्वात् " ॥ ९७ ॥**

संबन्धनित्यता=दिक्कालादीनां संबन्धस्य नित्यत्वं न=न सम्भवति । कुतः ? उभयानित्यत्वात्=दिक्कालयोर्वा कालाकाशयोर्वा संबन्धधर्मिणोरुभयोः प्रकृतिपुरुषान्यत्वेन नित्यत्वाभावादित्यर्थः ॥ ९७ ॥

ननु संबन्धिनामनित्यत्वेऽपि तत्संबन्धो नित्यः किं न स्यात्? तत्राह—

**"नाजः संबन्धो धर्मिग्राहकमानबाधात्" ॥ ९८ ॥**

संबन्धः=संबन्धिनामनित्यत्वे सति संयोगादिलक्षणस्तत्संबन्धोऽजः= नित्यो न=न संभवति। कुतः? धर्मिग्राहकमानबाधात्=धर्मिणः=संबन्धस्य ग्राहकं यन्मानं=प्रमाणं तेनैव तन्नित्यत्वस्य बाधात्=अभावनिश्चयादित्यर्थः ।

यो यः संबन्धः स सर्वः कादाचित्कविभागपूर्वक इति संबन्धं ग्राहयत्प्रमाणं तदजत्वाभावमपि ग्राहयतीति भावः ॥ ९८ ॥

ननु एवम् 'इहेदमिति यतः कार्यकारणयोः स समवायः'[१] इति वैशेषिकोक्तः समवायसंबन्धोऽपि नित्यो न स्यात्तत्राह—

**"न समवायोऽस्ति प्रमाणाभावात्" ॥ ९९ ॥**

समवायः=समवायाख्यः कश्चित्संबन्धो नास्ति=न विद्यते। कुतः? प्रमाणाभावात्=तत्साधकप्रमाणानुपलम्भादित्यर्थः ।

तदाख्यः सम्बन्ध एवास्माकं नास्ति दूरे तन्नित्यत्वमिति भावः ॥ ९९ ॥

ननु कथं तत्साधकप्रमाणाभावः प्रत्यक्षानुमानयोरेव तत्र प्रमाणत्वात्, तत्राह—

**"उभयत्राप्यन्यथासिद्धेर्न प्रत्यक्षमनुमानं वा" ॥ १०० ॥**

प्रत्यक्षं=शुक्लः पट इत्यादिप्रत्यक्षमनुमानं वा=विशिष्टबुद्धिः विशेषणविशेष्यसंबन्धविषया, विशिष्टबुद्धित्वात्, दण्डीपुरुष इति विशिष्टबुद्धिवदित्याद्यनुमानं वा न=तत्र प्रमाणं न भवति। कुतः? उभयत्राप्यन्यथासिद्धेः= प्रमाणद्वयेऽपि स्वरूपसंबन्धेनैवोपपत्तेरित्यर्थः ।

---

१ वैशेषिके—अ० ७—आ० २—सू० २६ ।

**प्रमाणद्वयं** स्वरूपसंबन्धं गोचरयति । न समवायसंबन्धमिति भावः **इदमत्रबोध्यम्** यंहि वैशेषिका नैयायिकाश्च समवायसंबन्धमाचक्षते तमेव सांख्या योगाश्च स्वरूपसम्बन्धं वैदान्तिकाश्चतादात्म्यसम्बन्धं व्याचक्षत इति न वैदिकदर्शनानां कश्चिन्मिथो विरोध इति ॥ १०० ॥

सर्वथाऽनुमेया क्रियेति बौद्धस्तं प्रत्याह–

**"नानुमेयत्वमेव क्रियाया नेदिष्ठस्य तत्तद्वतोरेवापरोक्षप्रतीतेः" ॥ १०१ ॥**

क्रियायाः=कर्मणोऽनुमेयत्वमेव=केवलंसंयोगविभागलिङ्गकानुमानविषयत्वमेव न=न मन्तव्यम् । कुतः ? नेदिष्ठस्य=अतिनिकटवर्तिनः पुरुषस्य तत्तद्वतोरेव=क्रियाक्रियावतोरुभयोरप्यपरोक्षप्रतीतेः=चलतीति प्रत्यक्षोपलब्धेरित्यर्थः ॥ १०१ ॥

समप्रधानानां क्षित्यादिपञ्चभूतानां परिणामः स्थूलो देह इत्येकदेशिनस्तान् निराकरोति ।

**"न पाञ्चभौतिकं शरीरं, बहूनामुपादानायोगात्"॥१०२॥**

शरीरं=स्थूलं शरीरं पाञ्चभौतिकं= पञ्चानांसमप्रधानानां क्षित्यादिभूतानां कार्य्यं न=न भवति । कुतः? बहूनां=भिन्नजातीयानां बहूनामुपादानायोगात्=एकं कार्य्यं प्रति समप्रधानभावेनोपादानत्वासंभवादित्यर्थः ।

तन्तूनां बहुत्वेऽपि समानजातीयत्वान्नदोष इति द्रष्टव्यम् ॥ १०२॥

स्थूलमेवैकं शरीरमिति बाह्यास्तान् प्रत्याह–

**"न स्थूलमितिनियम आतिवाहिकस्यापि विद्यमानत्वात्" ॥ १०३ ॥**

स्थूलमितिनियमः = स्थूलमेवैकंशरीरमितिनियमो न = नोपपद्यते । कुतः ? आतिवाहिकस्यापि=जीवात्मानं पुरुषं देहाद्देहान्तरमतिवाहयतीत्यातिवाहिकं=सूक्ष्मं शरीरम् । तस्यापि विद्यमानत्वात्=स्थूलाभ्यन्तरे सत्त्वादित्यर्थः ।

लोकवल्लोकान्तरेऽपि निराश्रयस्य पुंसो गमनासंभवात्स्थूलादन्यदातिवाहिकं शरीरमभ्युपेतव्यमिति रहस्यम् ॥ १०३ ॥

अप्राप्तार्थप्रकाशकानीन्द्रियाणीति बौद्धास्तान् पराजयते ।

**"नाप्राप्तप्रकाशकत्वमिन्द्रियाणामप्राप्तेःसर्वप्राप्तेर्वा"१०४**

इन्द्रियाणां=चक्षुरादिज्ञानेन्द्रियाणामप्राप्तप्रकाशकत्वम्=आत्मासम्बद्धार्थावभासकत्वं न=न संभवति । कुतः ? अप्राप्तेः=प्राप्तिरत्र ज्ञानम् । व्यवहितवस्तुज्ञानाभावात्, सर्वप्राप्तेर्वा=व्यवहिताऽव्यवहितसर्ववस्तुज्ञानप्रसंगाद्देत्यर्थः ॥ १०४ ॥

नन्वेवं चक्षुरिन्द्रियस्य तैजसत्वमेव सिध्येत्, नाहङ्कारिकत्वम् । लोके तेजस एव विषयप्रकाशार्थं किरणरूपेण विषयदेशापसर्पणदर्शनात्, तत्राह—

**" न तेजोऽपसर्पणात्तैजसं चक्षुर्वृत्तितस्तत्सिद्धेः" ॥१०५॥**

तेजोऽपसर्पणात्=दूरदेशस्थविषयप्रकाशार्थं किरणरूपेण तेजसोऽपसर्पणदर्शनाच्चक्षुः=चक्षुरिन्द्रियं तैजसं=तेजःकार्य्यं न=न संभवति । कुतः ? वृत्तितस्तत्सिद्धेः=तैजसत्वाभावेऽपितस्यशरीरमपरित्यज्यवृत्तिविशेषेण विषयदेशापसर्पणोपपत्तेरित्यर्थः ।

यत्त्वाश्रयमपरित्यज्य बहिरपसर्पति, तत्तैजसमिति नियमो नास्ति । प्राणानामतैजसत्वेऽपि नासाग्रतो बहिरपसर्पणदर्शनादिति भावः ॥१०५॥

ननु तद्वृत्तेरेवासिद्धत्वात्कथं वृत्तितस्तत्सिद्धिस्तत्राह—

**" प्राप्तार्थप्रकाशलिङ्गाद्वृत्तिसिद्धिः " ॥ १०६ ॥**

प्राप्तार्थप्रकाशलिङ्गात्=इन्द्रियैः प्राप्तस्य=संबद्धस्यार्थस्य=विषयस्य जायमानो यः प्रकाशः=अर्थाकारःप्रत्ययस्तल्लक्षणाल्लिङ्गाद्वृत्तिसिद्धिः=चक्षुरादीनां तेषां वृत्तेः सिद्धिर्भवतीत्यर्थः ।

आत्मासंबद्धमर्थमिन्द्रियाणि न प्रकाशयन्ति, प्रकाशश्चानुभवसिद्धः ।

स एवान्यथानुपपन्नः संबन्धप्रयोजिकां वृत्तिं साधयति । तत्सिद्धौ च सुतरां ततस्तात्सिद्धिरिति भावः ॥ १०६ ॥

ननु सा किं विस्फुलिङ्गादिवच्चक्षुरादिभागविशेषो वा रूपादिवत्तद्गुणविशेषो वा, तत्राह—

**"भागगुणाभ्यां तत्त्वान्तरं वृत्तिःसंबन्धार्थं सर्पतीति" १०७**

वृत्तिः=चक्षुरादीन्द्रियाणां विषयैः संबन्धप्रयोजिका वृत्तिर्भागगुणाभ्यां=तद्विभक्तांशो भागः, गुणः प्रसिद्धो रूपादिस्ताभ्यां द्वाभ्यां तत्त्वान्तरम्=अन्यः पदार्थः=आहङ्कारिकश्चाक्षुषादिपरिणामविशेष इति यावत् । कुतः ? संबन्धार्थं सर्पतीति=हेत्वर्थक इतिः । यस्मादेषा संबन्धार्थम्=इन्द्रियार्थसंयोगाय सर्पति=विषयदेशं गच्छतीत्यर्थः ।

वृत्तेर्विभक्तांशत्वे तद्द्वारा चक्षुरादीनामर्थसंबन्धो न भवेत्, गुणत्वे चाक्रियत्वात्स्वयं न सर्पत्संबध्नाति सर्पति च । तस्माद्द्वाभ्यां ताभ्यां तत्त्वान्तरं वृत्तिरिति भावः ॥ १०७॥

ननु चक्षुरादीनां द्रव्यत्वे वृत्तिभिर्विषयदेशोपगमनं संभवति नाहंकारिकत्वे । लोके द्रव्यस्यैव तथात्वदर्शनात्, तत्राह—

**"न द्रव्यनियमस्तद्योगात्" ॥ १०८ ॥**

न=सांख्यानामस्माकं द्रव्यत्वात् क्रियानियमो न । किन्तु तद्योगात्=क्रियायोगात् द्रव्यनियमः=यत्क्रियायोगि तद्द्रव्यमिति नियम इत्यर्थः ।

तथा चेन्द्रियाणामाहंकारिकत्वेऽपि नद्रव्यत्वव्याघात इति भावः॥ १०८॥

नन्वत्राहङ्कारिकाणि सन्त्यपीन्द्रियाणि देशान्तरे भौतिकानि भविष्यन्ति । देशभेदवत्कार्य्यभेदस्यापि संभवात्, तत्राह—

**"न देशभेदेऽप्यन्योपादानताऽस्मदादिवन्नियमः"॥१०९॥**

इन्द्रियाणामिति शेषः । चक्षुरादीन्द्रियाणां देशभेदेऽपि=ब्राह्मादिदेशविशेषेऽपि=देशान्तरेऽपीतियावदन्योपादानता=अहंकारातिरिक्तभूतोपादानता=

भौतिकत्वमिति यावन्न=नास्ति । किन्त्वस्मदादिवन्नियमः=अत्रेव सर्वत्र तेषामाहङ्कारिकत्वनियम इत्यर्थः ॥ १०९ ॥

नन्वेवं तर्हि कथं वैदिकानां दर्शनान्तरे "भूतेभ्य इति भौतिकत्वव्यपदेशः ? तत्राह—

**" निमित्तव्यपदेशात्तद्व्यपदेशः "॥ ११०॥**

निमित्तव्यपदेशात्=उपष्टम्भकत्वान्निमित्तभूतेषु तेजआदिभूतेषूपादानतोपचारो निमित्तव्यपदेशस्तस्मात्तद्व्यपदेशः=भौतिकत्वव्यपदेश इत्यर्थः ।

यथेन्धनोपष्टम्भेन तदनुगतात्तेजसो जायमानो वह्निरिन्धनाद्वह्निरिति व्यपदिश्यते । तथा तेजआदिभूतोपष्टम्भेन तदनुगतादहंकाराज्जायमानानीन्द्रियाणि भूतेभ्य इति व्यपदिश्यन्ते । नोपादानताऽभिप्रायादिति न दर्शनान्तरविरोध इतिभावः ॥ ११० ॥

अण्डजजरायुजस्वेदजोद्भिज्जमिति चतुर्विधं शरीरमिति केचित, तान् प्रत्याह—

**"ऊष्मजाण्डजजरायुजोद्भिज्जसाङ्कल्पिकसांसिद्धिकञ्चेति न नियमः" ॥ १११ ॥**

हेत्वर्थकश्चकारः । सर्वेषां भौतिकत्वं समानमिति सूचनाय समाहारः।यस्मादूष्मजाण्डजजरायुजोद्भिज्जसांकल्पिकसांसिद्धिकम्=ऊष्मणो जातं कृमिदंशादिशरीरमूष्मजम् । अण्डाज्जातं पक्षिसरीसृपादिशरीरमण्डजम् । गर्भवेष्टनं चर्म जरायुस्तस्माज्जातंमनुजगवादिशरीरंजरायुजम् । भूमिमुद्भिद्य जातं तरुगुल्मादिशरीरमुद्भिज्जम् । सृष्ट्यादौ प्रजापतिसङ्कल्पाज्जातमार्षं शरीरं सांकल्पिकम् । योगसाधनाज्जाता सिद्धिः संसिद्धिस्ततोजातं योगिनां यथाकामं शरीरं सांसिद्धिकमिति षड्विधं शरीरमिति=अस्मान्नियमः=चतुर्विधमेव स्थूलं शरीरमिति नियमो न=न संभवतीत्यर्थः ॥ १११ ॥

नन्वेषुसर्वेषु लोके पार्थिवत्वव्यपदेशदर्शनात्कथं "पाञ्चभौतिको देह" इति तृतीये सूत्रितं, तत्राह–

**"सर्वेषु पृथिव्युपादानमसाधारण्यात्तद्व्यपदेशः पूर्ववत्" ॥ ११२ ॥**

यतोऽस्त इति शेषः। यस्मात् सर्वेषु=पूर्वोक्तेषु षड्विधशरीरेष्वसाधारण्यात्=प्राधान्यात्पृथिव्युपादानं=भूमिरुपादानकारणमितराणि च जलादीनि साधारण्यात्,अतस्तद्व्यपदेशः=शरीरेषु तेषु पार्थिवत्वव्यपदेशः।तत्रोदाहरणं पूर्ववत्=यथेन्द्रियेष्वाहङ्कारिकत्वव्यपदेश इत्यर्थः ॥ ११२ ॥

ननु शरीराणां भौतिकत्वे तदन्तर्वर्तिनः प्राणस्यापि भौतिकत्वं किं न स्यात्? तत्राह–

**"न देहारम्भकस्य प्राणत्वमिन्द्रियशक्तितस्तत्सिद्धेः" ॥ ११३ ॥**

देहारम्भकस्य= शरीरोत्पादकस्य भूतपञ्चकस्य प्राणत्वं=प्राणोत्पादकत्वं न=नास्ति। कुतः? इन्द्रियशक्तितः=इन्द्रियाणांशक्तिविशेषात्तत्सिद्धेः=तस्य प्राणस्योत्पत्तेरित्यर्थः ॥ ११३ ॥

नन्वेतानि शरीराणि भोक्ता जीवः कदाऽधितिष्ठति? तत्राह–

**"भोक्तुरधिष्ठानाद्भोगायतननिर्माणमन्यथापूतिभावप्रसङ्गात्" ॥ ११४ ॥**

भोक्तुः=जीवात्मनः पुरुषस्याधिष्ठानात्=अधिष्ठात्रधिष्ठेयभावलक्षणःसम्बन्धविशेषोऽधिष्ठानं, तस्मात्ततो भोगायतननिर्माणं=भौतिकाभ्यां शुक्रशोणिताभ्यां भोगायतनस्य=शरीरस्य निर्माणम्=आरम्भो भवति। अन्यथा=पुरस्तात्तदधिष्ठानाभावे पूतिभावप्रसङ्गात्=मृतशरीरवच्छुक्रशोणितयोस्तयोःपूतित्वप्रसक्तेरित्यर्थः ॥ ११४ ॥

---

१ सां. अ. ३ सू. १७।

नन्तु परमात्मनोऽधिष्ठानात्कार्यमात्रारम्भश्रुतेः कथमुच्यते भोक्तुरधिष्ठानाद्भोगायतननिर्माणं, तत्राह—

" भृत्यद्वारा स्वाम्यधिष्ठितिर्नैकान्तात् "॥११५॥

भृत्यद्वारा=परमात्मना सर्वदाभरणीयत्वाद्भृत्यो जीवात्मापुरुषः । तद्वारा तत्रस्वाम्यधिष्ठितिः=स्वामिनः=परमात्मनोऽधिष्ठानम् । '[१] य आत्मनि तिष्ठन् ' इति श्रुतेः । नैकान्तात्=न साक्षादित्यर्थः ।

भोक्तारं जीवात्मानं पुरुषमधिष्ठाय जगदधिपतिरीश्वरस्तदधिष्ठितं भोग्यजातमधितिष्ठतीति भावः ।

यद्वा नन्तु जीवात्मनः पुरुषस्य कूटस्थत्वेन स्वतो व्यापाराभावात्कथं तत्र तस्याधिष्ठानं स्यात् ? तत्राह । भृत्यद्वारा=भृत्यतुल्यमत्र बुद्धिसत्त्वप्रधानं सूक्ष्मं शरीरम् । तद्वारा तत्र स्वाम्यधिष्ठितिः=स्वामिनः पुरुषस्याधिष्ठानं नैकान्तात्=न साक्षादित्यर्थः ॥ ११५ ॥

नन्वेवं परमात्मनोऽप्यधिष्ठातृत्वेन सन्निहिततरत्वाद् बुद्धिसत्त्वसरूपतावत्तत्सरूपताऽपि जीवात्मनः स्यात्, तत्राह—

" समाधिसुषुप्तिमोक्षेषु ब्रह्मरूपता " ॥ ११६ ॥

भोक्तुरित्यनुवर्तते । जीवात्मनः पुरुषस्य जाग्रदादौ बुद्धिसत्त्वसरूपतावत्समाधिसुषुप्तिमोक्षेषु=समाधिर्योगः, सुषुप्तिर्निद्रा, मोक्षो विदेहकैवल्यम् । समाधिश्च सुषुप्तिश्च मोक्षश्च, ते तथा, तेषु ब्रह्मरूपता=परमात्मसरूपता भवतीत्यर्थः ।

यथाहिजाग्रदादौ बुद्धिधर्मान् दुःखादीन् धारयन् जीवोऽयं बुद्धिरूपः सम्पद्यते यत्रेदमुक्तं भवति '[२] ध्यायतीव लेलायतीव । [३] वृत्तिसारूप्यमितरत्र ' इत्यादीति । तथैव समाधिसुषुप्तिमोक्षेषु निर्दुःखादीन् ब्रह्मधर्मान् धारयन् तत्स्वरूपानन्दमुपभुञ्जानो ब्रह्मरूपः सम्पद्यते । न तद्-

१ बृ.—अ. ५—ब्रा. ७—२२॥२बृ.अ.६ ब्रा. ३—७ ।३॥यो. पा. १सू. ४ ।

भेदमापद्यते । 'यदा पञ्चावतिष्ठन्ते ज्ञानानि मनसासह । बुद्धिश्च न विचेष्टते तामाहुः परमां गतिम्' 'सता सोम्य तदा सम्पन्नो भवति' 'जुष्टं यदा पश्यत्यन्यमीशमस्य महिमानमिति वीतशोकः । निरञ्जनः परमं साम्यमुपैति' 'ब्रह्मविदाप्नोति परम्' 'आनन्दं ब्रह्मणो विद्वान् न बिभेति कदाचन' इत्यादिश्रुतेरिति मन्तव्यम् ॥ ११६ ॥

ननु ब्रह्मरूपतातौल्ये समाधिसुषुप्तिभ्यां मोक्षस्य विशेषो न स्यात्, तत्राह—

" द्वयोः सबीजमन्यत्र तद्धतिः " ॥ ११७ ॥

ब्रह्मरूपत्वमित्यनुवर्तते । द्वयोः=समाधिसुषुप्त्योः सबीजं=क्लेशकर्मादिवासनान्तेन बन्धबीजेन सहितं ब्रह्मरूपत्वम्, अन्यत्र=मोक्षे तु तद्धतिः=तस्य बन्धबीजस्य हानं भवतीत्यर्थः ।

बन्धबीजहानाहानाभ्यां विशेष इति भावः ॥ ११७ ॥

ननु समाधिसुषुप्ती दृष्टे न मोक्षस्तत्राह—

" द्वयोरिव त्रयस्यापि दृष्टत्वान्न तु द्वौ " ॥ ११८ ॥

द्वयोरिव=समाधिसुषुप्त्योरिवत्रयस्यापि=तृतीयस्यमोक्षस्यापिदृष्टत्वात्=श्रुतिस्मृतिभ्यामवगतत्वान्न तु द्वौ=न समाधिसुषुप्ती एव स्तोऽपि च मोक्षोऽप्यस्तीत्यर्थः ॥ ११८ ॥

ननु समाधौ क्लेशकर्मादिवासनायाः कौण्ठ्यात्सर्ववृत्तिविलये जीवात्मनः पुरुषस्य ब्रह्मरूपत्वमस्तु । सुषुप्तौ पुनस्तदभावात्कथमस्य ब्रह्मरूपता स्यात्, तत्राह—

" वासनयाऽनर्थख्यापनं दोषयोगेऽपि न, निमित्तस्य प्रधानबाधकत्वम् " ॥ ११९ ॥

१ कठो. व.६+१० । २ छां. प्र. ६ खं. ८+१ । ३ मुं. ३ खं. १—२—३ । ४ तै. ब्र. व. अनु. १+१ । ५ तै. ब्र. व अनु. ४—१ ।

दोषयोगेऽपि=यथा समाधौ तथा निद्रादोषयोगेऽपि=सुषुप्तावपीति-यावद् वासनया=क्लेशकर्मादिवासनयाऽनर्थख्यापनम्=आत्मातिरिक्तार्थानुभावनं न=न संभवति । कुतः? यतो निमित्तस्य=सुषुप्तिंप्रति निमित्तभूतस्य-निद्रादोषस्य प्रधानबाधकत्वं=ख्यातिं प्रति प्रधानं कारणं वासना, तद्बाधकत्वं=तदभिभावकत्वमस्तीत्यर्थः ।

तथा च समाधिवत्सुषुप्तावपि वासनाकौण्ठ्यात्सर्ववृत्तिविलये ब्रह्मरूपता संभवतीति भावः ॥ ११९ ॥

यत्नेनेष्वादिक्षेपे जायमानादाद्यकर्मणो वेगाख्यः संस्कारो जायते ततः कर्म, ततश्च संस्कारः, पुनरप्येवमितिनैयायिकैकदेशिनस्तान्निराकुर्वन्नाह—

**“ एकः संस्कारः क्रियानिर्वर्त्तको न तु प्रतिक्रियं संस्कारभेदा बहुकल्पनाप्रसक्तेः” ॥ १२० ॥**

एकः=आद्यकर्मनिर्वर्त्यः प्रथम एव संस्कारः=वेगाख्यः संस्कारः-क्रियानिर्वर्तकः=यावदिष्वादिपतनंतावत्क्रियासन्तानस्य जनको, नतु प्रतिक्रियं=क्रियां क्रियां प्रति संस्कारभेदाः=वेगाख्यसंस्कारभेदाः सन्ति । कुतः? बहुकल्पनाप्रसक्तेः=बहुसंस्कारकल्पनाप्रसङ्गादित्यर्थः ॥ १२० ॥

ननु यदुक्तमुद्भिज्जं भोक्तृशरीरं, तन्न युक्तम् । तत्र शरीरत्वप्रयोजिंकाया बाह्यबुद्धेरनुपलम्भात्तत्राह—

**“ न बाह्यबुद्धिनियमो वृक्षगुल्मलतौषधिवनस्पतितृणवीरुधादीनामपि भोक्तृभोगायतनत्वं पूर्ववत्” ॥ १२१ ॥**

बाह्यबुद्धिनियमः=बहिरिन्द्रियजन्यं बाह्यवस्तुविषयं ज्ञानं बाह्यबुद्धिः सा यत्र, तदेव भोक्तृशरीरमिति नियमो न=न भवति । किन्तु ज्ञानमात्रम्, अतो वृक्षादिवीरुधन्तानामप्यन्तःसंज्ञत्वाद्भोक्तृभोगायतनत्वं=भोक्तृशरीरत्वं पूर्ववत्=ऊष्मजादिवन्मन्तव्यमित्यर्थः ।

तत्र पुष्पाज्जायमानफलाश्चूतादयस्तरवो वृक्षाः,गुल्माकाराः सोमलताप्रभृतयो गुल्मलताः, ओषधयः फलपाकान्ता व्रीहियवादयः,पुष्पादृते जायमानफलाः पनसोदुम्बराश्वत्थादयो वृक्षविशेषा वनस्पतयः,नडप्रभृतीनि तृणानि, शाखादिभिर्विस्तृता लता वीरुधः, फलहीनाः केवलपुष्पिणो वृक्षविशेषा आदिपदार्थो इति विवेकः ॥ १२१ ॥

तत्र श्रुतिस्मृती प्रमाणयति ।

**" स्मृतेश्च " ॥ १२२ ॥**

वृक्षादीनां भोक्तृभोगायतनत्वमित्यनुवर्तते।श्रुतिसमुच्चयाय चः '**अस्य यदेकां शाखां जीवो जहात्यथ सा शुष्यति**' इत्यादिश्रुतेः '**शरीरजैः कर्मदोषैर्याति स्थावरतां नरः । वाचकैःपक्षिमृगतां मानसैरन्त्यजातिताम्**' इत्यादिस्मृतेश्च वृक्षादीनां भोक्तृभोगायतनत्वमित्यर्थः ॥ १२२ ॥

ननु वृक्षादीनां भोक्तृभोगायतनत्वे तेषां लौकिकवैदिककर्माधिकारिताऽपि स्यात्तत्राह—

**"न देहमात्रतः कर्माधिकारिता, वैशिष्ट्यश्रुतेः"॥१२३॥**

देहमात्रतः=शरीरमात्रात्कर्माधिकारिता=लौकिकवैदिककर्माधिकारित्वं न=कस्यचिन्न भवति । कुतः ? वैशिष्ट्यश्रुतेः=मनुष्यत्वब्राह्मणत्वादिवैशिष्ट्यस्यापि तत्र श्रवणादित्यर्थः ॥ १२३ ॥

ननु समाने देहे कुत एष भेदः? तत्राह—

**" त्रिधा त्रयाणां व्यवस्था कर्मदेहोपभोगदेहोभयदेहाः " ॥ १२४ ॥**

यत इति शेषः । यस्मात् त्रयाणाम्=उत्तममध्यमाधमानां सर्वदेहिनां कर्मदेहोपभोगदेहोभयदेहा इति त्रिधा=त्रिप्रकारा व्यवस्था=देहव्यवस्थेत्यर्थः ।

---

१ छां. प्र. ६—ख. ११—२।२मनु—अ. १२—श्लोक ८ ।

तत्र ब्रह्मचारिवानप्रस्थानां कर्मदेहः। पश्वादिस्थावरान्तानामुपभोगदेहः। गृहस्थानामुभयदेह इति विवेकः ।

यद्यपि ब्रह्मादिस्तम्बान्तानां सर्वेषामुपभोगदेहत्वतौल्यात्त्रिधा विभागो न संभवति, तथापि प्राधान्येनैष विभाग इति विज्ञेयम् ॥ १२४ ॥

ननु चतुर्थाश्रमिणः शरीरं न गणितं, तत्राह—

**" न किञ्चिदप्यनुशयिनः " ॥ १२५ ॥**

अनुशयिनः=प्रारब्धकर्माविशेषोऽनुशयः, स विद्यते यस्य, तस्य=त्यक्तसर्वकर्मणो विवेकवतः संन्यासिनः किञ्चिदपि=पूर्वोक्तेषु त्रिविधशरीरेषु किमपि शरीरं न=नास्तीत्यर्थः ।

उपदेशादिकन्तु तस्य स्वाभाविकी लीलेति सर्वमवदातम् ॥ १२५ ॥

ज्ञानेच्छाकृत्यादयोबुद्धिसत्त्वगुणास्तादात्म्यात्पुरुषे व्यपदिश्यमाना बुद्धिसत्त्वपरिणामविशेषत्वादनित्या इति सिद्धान्तः। तत्रैकस्मिन् कस्मिंश्चिदाश्रये तेषामनित्यत्वदर्शनेऽप्याश्रयान्तरे नित्यत्वं भविष्यति, किमवशेषेण सर्वत्रानित्यत्वाभ्युपगमेनेति परेणाशङ्कित आह—

**"न बुद्ध्यादिनित्यत्वमाश्रयविशेषेऽपि वह्निवत्"॥१२६॥**

आश्रयविशेषेऽपि=एकाश्रयवदाश्रयान्तरेऽपि बुद्ध्यादिनित्यत्वं=बुद्धिर्ज्ञानम् । आदिपदेनेच्छाकृत्यादिसंग्रहः । तेषां ज्ञानेच्छाकृत्यादीनां नित्यत्वम्=उत्पत्तिविनाशशून्यत्वं न=न संभवति । वह्निवत्=यथा महानसादावेकत्राश्रयेऽनित्यत्वेन दृष्टस्य वह्नेराश्रयान्तरे न नित्यत्वमित्यर्थः ॥ १२६ ॥

ननु ज्ञानादयो न बुद्धिसत्त्वगुणाः किन्तु जीवगुणाः, जीवाश्च नित्या इति तद्गुणा अपि नित्याः किं न स्युस्तत्राह—

**" आश्रयासिद्धेश्च " ॥ १२७ ॥**

न बुद्ध्यादिनित्यत्वमित्यनुवर्त्तते । पक्षे पक्षतावच्छेदकाभाव आश्रयासिद्धिः । पक्षश्चात्र जीवगुणाबुद्ध्यादयः, तेषां जीवगुणत्वस्यासिद्धेश्च न नित्यगुणत्वेन हेतुना नित्यत्वं सिध्यतीत्यर्थः ।

अत्र वृत्त्यात्मनो ज्ञानस्य नित्यत्वं प्रतिषिध्यते न स्वरूपभूतस्य ज्ञानस्येति द्रष्टव्यम् ॥ १२७ ॥

सांसिद्धिकं शरीरमित्युक्तम् । तदुपपत्तये योगसिद्धीरभ्युपाययति ।

**"योगसिद्धयोऽप्यौषधादिसिद्धिवन्नापलपनीयाः" १२८॥**

औषधादिसिद्धिवत्=आदिनामणिमन्त्रतपांसि संगृह्यन्ते । तत्प्रयोगेण जायमानरोगहरणादिसिद्धिवद् योगसिद्धयोऽपि=योगाभ्यासेन जायमाना अणिमादिसिद्धयोऽपि नापलपनीयाः=नापह्नोतुमर्हाः सन्तीत्यर्थः ।

औषधादिसिद्धिवत्ता अप्यभ्युपगन्तव्या इति भावः ॥ १२८ ॥

सम्प्रति परमतनिराकरणाध्यायमुपसंहरन्नन्ते पुरुषसिद्धिप्रतिकूलतया भूतचैतन्यवादिनं चार्वाकं प्रत्याचष्टे ।

**"न भूतचैतन्यं प्रत्येकादृष्टेः सांहत्येऽपि च सांहत्येऽपि च" ॥ १२९ ॥**

अध्यायपरिसमाप्तिपरावीप्सा । भिन्नक्रमश्चः । भूतचैतन्यं=भूतानां=वियन्मरुत्तेजोऽम्बुपृथिवीनां चैतन्यं=प्रत्येकं चेतनत्वं न=न दृश्यते।प्रत्येकादृष्टेश्च=एकैकस्मिन्नदर्शनाच्चसांहत्येऽपि=देहाकारेण परिणते तत्संघातेऽपि चैतन्यं न युक्तमित्यर्थः ।

तृतीयाध्यायेचेदं स्वसिद्धान्तविधयोक्तम् । अत्र च परमतनिराकरणायेति न पौनरुक्त्यमिति भाष्यम् ॥ १२९ ॥

स्वसिद्धान्तं दृढीकर्तुं परसिद्धान्तनिर्णयः ।
प्रसङ्गाच्चात्मसिद्धान्तः पञ्चमेऽस्मिन्निरूपितः ॥ १ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्य्योदासीनवर्य्यात्मारामभगवत्पादशिष्यहरिप्रसादकृतायां सांख्यसूत्रवृत्तौ परमतनिर्जयाध्यायः पञ्चमः ॥ ५ ॥

# अथ षष्ठोऽध्यायः ।

पञ्चमाध्यायेन परसिद्धान्तं निराकृत्य चतुर्भिःपूर्वाध्यायैर्निरूपितस्यात्मसिद्धान्तस्य स्थूणानिखननन्यायेन पुनः स्थिरीकर्तुं षष्ठाध्यायमारभमाणः पूर्वन्तावदात्मास्तित्वमाह—

**" अस्त्यात्मा, नास्तित्वसाधनाभावात् " ॥ १ ॥**

आत्मा=देहेन्द्रियादिसंघातद्रष्टा जीवात्मा पुरुषोऽस्ति=विद्यते । कुतः ? नास्तित्वसाधनाभावात्=तन्नास्तित्वसाधकस्य हेतोरनुपलम्भादित्यर्थः ॥१॥

ननु नास्माभिरात्मा प्रतिषिध्यते, किन्तु तस्यदेहादिव्यतिरिक्तत्वं, तत्राह—

**" देहादिव्यतिरिक्तोऽसौ वैचित्र्यात् " ॥ २ ॥**

असौ=जीवात्मा पुरुषो देहादिव्यतिरिक्तः=देहादिप्रकृत्यन्तेभ्यस्तत्त्वेभ्यो भिन्नो भवितुमर्हति । कुतः ? वैचित्र्यात्=ततो विलक्षणत्वादित्यर्थः॥२॥

व्यतिरिक्तत्वे हेत्वन्तरमाह—

**" षष्ठीव्यपदेशादपि " ॥ ३ ॥**

देहादिव्यतिरिक्तोऽसावित्यनुवर्तते । ममेदं शरीरं ममेयं बुद्धिरित्यादिभेदव्यपदेशादपि देहादिव्यतिरिक्तोऽसौ पुरुष इत्यर्थः ॥ ३ ॥

ननु शिलापुत्रकस्य शरीरं, पुरुषस्य चैतन्यं, राहोःशिर इत्यादिव्यपदेशवदयमपि गौणो व्यपदेशो न मुख्यस्तत्राह—

**" न शिलापुत्रवद्धर्मिग्राहकमानबाधात् " ॥ ४ ॥**

शिलापुत्रवत्=शिलापुत्रकस्य शरीरमित्यादिवन्न=ममेदं शरीरमित्यादिव्यपदेशो गौणो न ।कुतः? धर्मिग्राहकमानबाधात्=धर्मिणः=जीवात्मनः पुरुषस्य ग्राहकं=शरीरादिभ्यो भेदेनानुभावकंयन्मानं=प्रत्यक्षानुमानशब्दलक्षणं प्रमाणं, तेन बाधात्=भेदगौणत्वस्य बाधनादित्यर्थः ।

शिलापुत्रादौ तु न तद्ग्राहकमानेन भेदगौणत्वबाध इति भावः ॥४॥

नन्वस्तु देहादिव्यतिरिक्तः पुमान्, तथापि दुःखिनस्तस्य कृतकृत्यता कथं स्यात् ? तत्राह—

" अत्यन्तदुःखनिवृत्त्या कृतकृत्यता " ॥ ५ ॥

अत्यन्तदुःखनिवृत्त्या=अन्तमतिक्रान्ता त्रिविधदुःखनिवृत्तिरत्यन्तदुःखनिवृत्तिस्तयैवास्य कृतकृत्यता=कृतकार्य्यता=कृतार्थत्वं भवतीत्यर्थः ॥ ५ ॥

ननु कस्मादस्य दुःखात्यन्तनिवृत्त्यैव कृतकृत्यता, न सुखाप्त्या, तत्राह—

" यथा दुःखात्क्लेशः पुरुषस्य न तथा सुखादभिलाषः " ॥ ६ ॥

यत इति शेषः । यस्मात्पुरुषस्य=भोक्तुर्जीवात्मनो यथा=येन प्रकारेण दुःखात्=दुःखसंबन्धात्क्लेशः=तद्विषयोद्वेषस्तथा=तेनप्रकारेण सुखात्=सुखसंबन्धादभिलाषः=तद्विषयः कामो न=न भवतीत्यर्थः ।

सुखाभिलाषतो दुःखद्वेषस्य बलीयस्त्वात्तदत्यन्तनिवृत्तिरेवोत्कटेच्छाविषयत्वात् परमपुरुषार्थो न सुखावाप्तिरिति भावः ॥ ६ ॥

ननु कस्मादस्य दुःखनिवृत्तिवत्सुखमभिलाषगोचरो न भवति, तत्राह—

" कुत्रापि कोऽपि सुखीति " ॥ ७ ॥

इतिर्हेतौ। यस्मात्कुत्रापि=ब्रह्माण्डमध्ये क्वचिदेव कोऽपि=ब्रह्मादिस्तम्बपर्य्यन्तानां जीवानां मध्ये कश्चिदेव सुखी=सुखभाग्भवतीत्यर्थः ॥ ७ ॥

नन्वेतेन सुखस्य दौर्लभ्यमायातं नाभिलाषाविषयत्वं, तत्राह—

" तदपि दुःखशबलमिति दुःखपक्षे निःक्षपन्ते विवेचकाः" ॥ ८ ॥

तदपि=ब्रह्माण्डमध्ये कदाचित्कुत्रचित्कस्यचित्कथंचिज्जायमानं सुखमपि विवेचकाः=विवेकिनो जना दुःखपक्षे=दुःखकोटौ निःक्षपन्ते=व्यवस्थापयन्ते। कुतः ? दुःखशबलमिति=हेत्वर्थक इतिः। यतो दुःखसंभिन्नमित्यर्थः ।

**यथा** विषसंसृष्टमन्नं बुद्धस्याभिलाषगोचरो न भवति तथैव दुःखशबलत्वात्सुखमपि दुःखनिवृत्तिवदस्यमुमुक्षुपुरुषस्याभिलाषगोचरो न भवतीति भावः ॥ ८ ॥

**ननु** केवला दुःखनिवृत्तिरपि परमपुरुषार्थो न संगच्छते, लोके सुखी स्यां दुःखी न स्यामिति दुःखनिवृत्तिवत्सुखस्याप्यभिलाषाविषयत्वदर्शनादित्याशंक्य दुःखात्यन्तनिवृत्त्या ब्रह्मानन्दोपभोगावश्यंभावादभिलाषोपपत्तेरदोष इति तात्पर्य्येण समादधान आह—

**" सुखलाभाभावादपुरुषार्थत्वमिति चेन्न द्वैविध्यात् " ॥ ९ ॥**

ननु सुखलाभाभावात्=मुक्तौ सुखावाप्त्यभावादपुरुषार्थत्वं=केवलदुःखनिवृत्तेरपि पुरुषार्थत्वं न स्यादिति चेन्न द्वैविध्यात्=दुःखात्यन्तनिवृत्तिरूपतया परमपुरुषार्थस्यैकप्रकारत्वेऽपि तदविनाभूतेन ब्रह्मानन्दोपभोगेन तस्य द्विप्रकारत्वाभ्युपगमादित्यर्थः ।

**इदमत्रबोध्यम्** । यद्यपि सांख्यानां दुःखात्यन्तनिवृत्तिरेवैकः परमपुरुषार्थो न सुखावाप्तिः, तेषां जायमानसुखमात्रस्य प्राकृतत्वेन दुःखशबलतया दुःखवत्परिहार्य्यत्वात् । तथापि ते मुक्त्यवस्थायां जीवात्मनः पुरुषस्य ब्रह्मानन्दोपभोगं मन्यन्ते '**सोऽश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चिता**' '**आनन्दं ब्रह्मणो विद्वान् न बिभेति कुतश्चन**' इत्यादिश्रुतेः । स च दुःखात्यन्तनिवृत्तिवन्नस्वतन्त्रःकश्चित्पुरुषार्थः, पुरुषपुरुषकारेण तस्य साक्षात्साध्यत्वाभावात् । किन्तु दुःखात्यन्तनिवृत्तौ सिद्धायामवश्यंभावित्वात्तन्नान्तरीयकः, तेनद्वैविध्ये सत्यपि प्रधानतः परमपुरुषार्थस्यैकत्वान्न पूर्वापरविरोध इति ॥ ९ ॥

---

१ तै. ब्र. व. अनु. १ । २ तै. ब्रह्म. व.अनु ९ ।

**ननु** साख्यानां दुःखमात्रस्य बुद्धिधर्मत्वेनात्मनिष्ठत्वासिद्धेः कथं तन्निवृत्तिरपि परमपुरुषार्थः स्यादिति शंकते ।

**"निर्गुणत्वमात्मनोऽसङ्गत्वादिश्रुतेः" ॥ १० ॥**

नन्वात्मनः=जीवात्मनः पुरुषस्य निर्गुणत्वं=दुःखादिनिखिलगुणसंबन्धशून्यत्वं स्वतः सिद्धमस्ति । कुतः ? असङ्गत्वादिश्रुतेः=**'असङ्गो ह्ययं पुरुषः'**[1] इत्यादिना तस्यासङ्गत्वादिश्रवणादित्यर्थः ।

**यस्य** यत्संबन्धो न भूतो न भवति न भविता, तस्य तन्निवृत्तिः कथमभ्यर्थनीया स्यादिति भावः ॥ १० ॥

**समाधत्ते ।**

**" परधर्मत्वेऽपि तत्सिद्धिरविवेकात् " ॥ ११ ॥**

परधर्मत्वेऽपि=दुःखादेर्बुद्धिसत्त्वधर्मत्वेऽप्यविवेकात=पूर्वोक्तलक्षणादविवेकाद्बुद्धिसत्त्वतादात्म्यापत्त्यातत्सिद्धिः=तस्य दुःखादेःपुरुषनिष्ठत्वसिद्धिरस्तीत्यर्थः ।

**यथा** वह्नितादात्म्याल्लोहस्य दाहादिमत्त्वं, तथा पुरुषस्यापि बुद्धिसत्त्वतादात्म्याद्दुःखादिमत्त्वमस्ति, तेन तस्य तदत्यन्तनिवृत्तिः परमाभ्यर्थनीयेति भावः ॥ ११ ॥

**नन्वस्त्वविवेकमूलकंपुरुषस्य** दुःखादिगुणजातमविवेकः पुनः किंमूलकः ? तत्राह—

**" अनादिरविवेकोऽन्यथादोषद्वयप्रसक्तेः " ॥ १२ ॥**

अविवेकः=पूर्वोक्तलक्षणोऽविवेकोऽनादिः=आदिः=कारणं, तन्नविद्यते यस्य, स तथा । कुतः ? अन्यथा दोषद्वयप्रसक्तेः=अन्यथा=सादित्वे दोषद्वयप्रसक्तेः=स्वोत्पत्तौ कारणान्तरापेक्षायामनवस्था, तदनपेक्षणेचमुक्तस्यापिपुनर्बन्ध इति दोषद्वयस्य प्रसंगादित्यर्थः ॥ १२ ॥

---

१ बृ. अ. ५ ब्रा.३—१५ ।

नन्वनादिश्चेदविवेकस्तर्हि नित्यः सेत्स्यति, तत्राह—

" न नित्यः स्यादात्मवदन्यथाऽनुच्छित्तेः " ॥ १३ ॥

अनादिरविवेक इत्यनुवर्तते। अनादिः सन्नप्यविवेको न नित्यः स्यात्=प्रागभाववन्नित्यो न भवेत् । अन्यथा=नित्यत्वेत्वात्मवदनुच्छित्तिः=यथाऽऽत्मनो नित्यत्वान्नाशो न भवति।तथाऽविवेकस्यापि नाशो न स्यादित्यर्थः १३॥

ननु किन्नाश्यस्तर्ह्यविवेकः ? तत्राह—

" प्रतिनियतकारणनाश्यत्वमस्य ध्वान्तवत् ॥ १४ ॥

अस्य=अविवेकस्यप्रतिनियतकारणनाश्यत्वम्=अविवेकनाशंप्रतियन्नियतंकारणंविवेकस्तन्नाश्यत्वं, ध्वान्तवत्=यथा ध्वान्तस्य=तमसःस्वनाशं प्रति नियतकारणेनालोकेन नाश्यत्वमित्यर्थः ॥ १४ ॥

ननु ध्वान्तालोकयोरन्वयव्यतिरेकाभ्यां नाश्यनाशकभावनियमोऽवगम्यते न विवेकाविवेकयोस्तत्राह—

" अत्रापि प्रतिनियमोऽन्वयव्यतिरेकात् " ॥ १५ ॥

अत्रापि=ध्वान्तालोकयोरिव विवेकाविवेकयोरपि प्रतिनियमः=नाश्यनाशकभावनियमोऽन्वयव्यतिरेकात्=विवेकसत्वेऽविवेकनाशसत्वम् । विवेकासत्वेऽविवेकनाशासत्वमित्यन्वयव्यतिरेकादवगन्तव्य इत्यर्थः ।

शुक्तिरजतादौ तथा दर्शनादिति भावः ॥ १५ ॥

नन्वेवं विवेकेनाविवेकनाशेऽपि बन्धनिवृत्तौ किमायातं, यत्कृते पुरुषस्य महान् प्रयत्नस्तत्राह—

" प्रकारान्तरासंभवादविवेक एव बन्धः " ॥ १६ ॥

प्रकारान्तरासंभवात्=प्रथमाध्यायोक्तानामविवेकातिरिक्तानां स्वभावादिबन्धप्रकाराणामसंभवादविवेक एव बन्धः=बन्धकत्वाद्बन्ध इत्यर्थः ॥ १६॥

नन्वविवेकस्य बन्धत्वे तन्निवृत्तिरूपाया मुक्तेर्विवेकसाध्यत्वेन कार्य्यत्वापत्तौ विनाशावश्यंभावान्मुक्तस्यापि पुनर्बन्धयोगोदुर्वारणः प्रसज्येत तत्राह—

"न मुक्तस्य पुनर्बन्धयोगोऽप्यनावृत्तिश्रुतेः" ॥ १७ ॥

अपि=मुक्तेर्विवेकसाध्यत्वेऽपि मुक्तस्य=मुक्तपुरुषस्य पुनर्बन्धयोगः=पुनरविवेकसंबन्धो न=न भवति। कुतः? अनावृत्तिश्रुतेः="न च पुनरावर्त्तते, न च पुनरावर्त्तते"[1] इत्यादिना तस्यापुनरावृत्तिश्रवणादित्यर्थः ॥ १७ ॥

ननु श्रुतिरुक्ता न युक्तिस्तत्राह—

"अपुरुषार्थत्वमन्यथा" ॥ १८ ॥

अन्यथा=मुक्तस्यापि पुनर्बन्धयोगेऽपुरुषार्थत्वं=मुक्तेः परमपुरुषार्थत्वं न स्यादित्यर्थः ।

भाधि क्षयानुसन्धानादिति भावः ॥ १८ ॥

युक्त्यन्तरमाह—

"अविशेषापत्तिरुभयोः" ॥ १९ ॥

उभयोः=बद्धमुक्तयोर्द्वयोरविशेषापत्तिः=अविशेषत्वं=तुल्यत्वमापद्येतेत्यर्थः—

मुक्तस्य पुनर्बन्धयोगे संसारितो विशेषो न स्यादिति भावः ॥ १९ ॥

ननु का सा मुक्तिर्यल्लाभादस्य पुनरावृत्तिर्न भवति? तत्राह—

"मुक्तिरन्तरायध्वस्तेर्न परः" ॥ २० ॥

अन्तरायध्वस्तेः=अन्तरायोऽविवेकस्तस्य ध्वस्तिः=विवेकेनध्वंसस्तस्मात्परः=अन्यः पदार्थो मुक्तिर्न=न भवतीत्यर्थः ।

अविवेकनिवृत्तिर्मुक्तिरिति भावः ॥ २० ॥

---

१ छां॰प्रपा॰ ८ खं॰ १५ ।

ननु दुःखात्यन्तनिवृत्तिर्मुक्तिरिति पुरस्तादुक्तम् । इदानीमन्तरायध्वस्तिर्मुक्तिरित्युक्तौ विरोधः स्यात, तत्राह—

**" तत्राप्यविरोधः " ॥ २१ ॥**

तत्रापि=अन्तरायध्वस्तिर्मुक्तिरित्युक्तावप्यविरोधः=विरोधोनास्तीत्यर्थः।

निमित्तापाये नैमित्तिकापायस्यार्थसिद्धत्वादिति भावः ॥ २१ ॥

नन्वन्तरायध्वस्तिश्चेन्मुक्तिस्तर्हि सर्वेषां श्रवणमात्रादेव विवेकज्ञाने जाते सा सेत्स्यति । किं मनननिदिध्यासनादिभिः साधनान्तरैस्तत्राह—

**" अधिकारित्रैविध्यान्न नियमः " ॥ २२ ॥**

अधिकारित्रैविध्यात्=अधिकारिणां=विवेकज्ञानाधिकारिपुरुषाणां त्रैविध्यात्=उत्तममध्यमाधमभेदेन त्रिप्रकारत्वान्ननियमः=श्रवणमात्रादेव सर्वेषां दृढविवेकज्ञानोदयनियमो नेत्यर्थः ।

असंभावनाविपरीतभावनयोरुपमर्दकत्वादपरोक्षं विवेकज्ञानं दृढमित्याख्यायते । तदेवानादित्वाद्दृढीभूतमविवेकं समूलकाषंकषितुं पारयति, नेतरत । तच्च न सर्वेषांश्रवणमात्रादुत्पत्तुमर्हति । शब्दमात्रस्य परोक्षज्ञानोपजननस्वाभाव्यात । किन्तु भगवदनुगृहीतानां पूर्वजन्माभ्यस्तश्रवणमनननिदिध्यासनादिसाधनानां केषांचित्पुण्यात्मनामुत्तमानामेवेति भावः॥२२॥

ननु येषां श्रवणमात्राद्विवेकज्ञानं दृढं नोत्पन्नं, तैस्तद्दार्ढ्यार्थं किं विधेयं ? तत्राह—

**" दार्ढ्यार्थमुत्तरेषाम् " ॥ २३ ॥**

दार्ढ्यार्थं=श्रवणाज्जायमानस्य विवेकप्रत्ययस्यदृढीभावायोत्तरेषां=श्रवणादुत्तरेषां मनननिदिध्यासनादीनांदीर्घकालनैरन्तर्य्यसत्कारादिपूर्वकं नियमेनानुष्ठानं विधेयमित्यर्थः ॥ २३ ॥

नन्वासनाभावे ध्यानादिकं न संभवति तत्र कस्यासनस्य नियमः? तत्राह-

**" स्थिरसुखमासनमिति न नियमः " ॥ २४ ॥**

स्थिरसुखं=यदेवस्थिरं=निश्चलंसत्सुखं=ध्यायिनः सुखावहं, तदेवासनम्=आसनपदवाच्यमिति=अतो ध्यानादौ नियमः=कस्य चित्पद्मासनविशेषस्य नियतिर्न=नास्तीत्यर्थः ॥ २४ ॥

**नन्** ध्यानस्य किं लक्षणं ? तत्राह-

**" ध्यानं निर्विषयं मनः " ॥ २५ ॥**

निर्विषयं=यदात्मातिरिक्तसर्वविषयान्निष्क्रान्तं मनः=चाञ्चल्यहेतुविषयानुरागाभावादात्मैकप्रत्ययकं चित्तं, तद्ध्यानं=ध्यानपदवाच्यं निदिध्यासनमिति यावदित्यर्थः ।

**अत्र** ध्यानमित्युक्तौ तदवस्थाभेदः समाधिस्तदवस्थाभेदः संप्रज्ञातादिसमाधिरप्युक्तोभवतीतिद्रष्टव्यम् ॥ २५ ॥

**ननु** ध्यानाध्यानयोःपुरुषस्यविशेषाभावात्किंध्यानेनेत्याशंक्य विशेषमाह-

**"उभयथाप्यविशेषश्चेन्नैवमुपरागनिरोधाद्विशेषः" ॥२६॥**

उभयथापि=ध्यानादिकं स्यान्न वा स्यादुभयप्रकारेणाप्यविशेषः=पुरुषस्य विशेषो न भवति, निःसङ्गत्वादन्यथा विकारित्वापत्तेरिति चेत=यदि शंकसे, नैवम्=एवं मा शङ्किष्ठाः । कस्मात् ? यस्मादुपरागनिरोधात्=ध्यानादौ क्लेशकर्मादिनानाविधवासनालक्षणस्योपरागस्यापगमाद्विशेषः=पुरुषस्य विशेषोऽस्त्येवेत्यर्थः ॥ २६ ॥

**ननु** निःसङ्गे निर्विकारिणि पुरुषे कथमुपरागस्तत्राह-

**" निःसंगेऽप्युपरागोऽविवेकात् " ॥ २७ ॥**

निःसंगेऽपि=क्लेशकर्मादिनानाविधवासनावासितबुद्धिसत्त्वसंसर्गरहितेऽपि पुरुषेऽविवेकात=सत्त्वपुरुषानन्यताप्रत्ययमात्रलक्षणादविवेकादुपरागः=उक्तवासनलक्षणोपरागोऽस्त्येवेत्यर्थः ॥ २७ ॥

नतु कीदृशोऽयं पुरुषस्योपरागः? तत्राह—

**" जवास्फटिकयोरिव नोपरागः किन्त्वभिमानः" ॥२८॥**

जवास्फटिकयोरिव नोपरागः=यथा जवास्फटिकयोः परस्परसंसर्गात्स्फटिके जवावर्णोपरागो, न तथा सत्त्वपुरुषयोः संसर्गात्पुरुषे वासनोपरागः, किन्त्वभिमानः=बुद्धिसत्त्वतादात्म्यात्पुरुषस्य तद्वासनाभिमान इत्यर्थः ॥२८॥

ननु तन्निरोधः किं ध्यानमात्रेण संभवति, तत्राह—

**"ध्यानधारणाभ्यासवैराग्यादिभिस्तन्निरोधः" ॥ २९ ॥**

आदिपदेन दोषदर्शन-यमनियमादिसाधनसंग्रहः।दोषदर्शनादिना विषयेषु वैराग्यं, तदनु यमनियमादिचित्तस्थैर्य्यसाधनानुष्ठानमभ्यास, स्तदन्वात्मनि चित्तबन्धो धारणा, तदनु पूर्वोक्तलक्षणं ध्यानादिकमित्येवंविधधारणादिसहितेनध्यानेनतन्निरोधः=तस्योक्तलक्षणोपरागस्यनिरोधोभवतीत्यर्थः ॥२९॥

ननु ध्यानादिभिरेभिः किं साक्षादुपरागनिरोधो भवति? तत्राह—

**" लयविक्षेपयोर्व्यावृत्त्येत्याचार्य्याः "॥ ३० ॥**

पूर्वसूत्रं समग्रमनुवर्तते । पूर्वोक्तैर्ध्यानादिभिर्लयविक्षेपयोः=निद्रावृत्तिर्लयः,प्रमाणविपर्ययविकल्पस्मृतिलक्षणावृत्तिर्विक्षेपस्तयोर्व्यावृत्या=निवृत्त्या=तान्निवृत्तिद्वारेतियावत्तन्निरोधः=वासनानिरोधोभवतीत्याचार्य्याः=सांख्याचार्य्या मन्यन्त इत्यर्थः ।

तथा च न पवापरावराध इति द्रष्टव्यम् ॥ ३० ॥

ननु लयविक्षेपयोर्व्यावृत्त्यर्थं क ध्यानादिकं कर्तव्यं? तत्राह—

**" नस्थाननियमश्चित्तप्रसादात् " ॥ ३१ ॥**

चित्तप्रसादात्=चित्तप्रसन्नतातो ध्यानादिकं भवति । तस्मात्स्थाननियमः=ध्यानाद्यर्थं कस्य चित्स्थानविशेषस्य नियमो न=नास्तीत्यर्थः ।

यत्र चित्तप्रसाद आलक्ष्येत, तत्र ध्यानादिकं कर्तव्यमिति भावः॥३१॥

ननु येषां बुद्ध्यादीनां तादात्म्यात्पुरुषस्य तद्वासनाभिमानस्तेषु मूलकारणता कस्यास्ति ? तत्राह—

**"प्रकृतेराद्योपादानताऽन्येषां तत्कार्य्यत्वश्रुतेः" ॥३२॥**

आद्योपादानता=प्रथमोपादानकारणता=मूलकारणतेति यावत्, प्रकृतेः=त्रिगुणात्मकस्य प्रधानस्य सर्वत्र मन्तव्या । कुतः ? अन्येषां=महदादीनां तेषां तत्कार्य्यत्वश्रुतेः=' **मायां तु प्रकृतिं विद्यात्** ' इत्यादिना प्रकृतिकार्यत्वस्य श्रवणादित्यर्थः ॥ ३२ ॥

ननु पुरुषस्यापिनित्यत्वात्तस्यैवाद्योपादानताऽस्तु, कृतंप्रकृत्या, तत्राह—

**"नित्यत्वेऽपि नात्मनो, योग्यत्वाभावात्" ॥ ३३ ॥**

आद्योपादानतेत्यनुवर्तते, आत्मनः=पुरुषस्य नित्यत्वेऽपि=प्रकृतिवन्नित्यत्वे सत्यप्याद्योपादानता न=न संभवति। कुतः? योग्यत्वाभावात्=तदयोग्यत्वादित्यर्थः ।

न केवलं नित्यत्वमेव तद्योग्यत्वमयोजकं किन्तु परिणामिनित्यत्वं । पुरुषस्य च नित्यत्वेऽपि परिणामिनित्यत्वाभावान्नतद्योग्यत्वामितिभावः ।

गुणवत्त्वं सङ्गित्वञ्चोपादानतायोग्यत्वामिति भाष्यम् ॥ ३३ ॥

ननु केवलात्मनस्तद्योग्यत्वाभावेऽप्यविद्यासहकृतस्य तस्य तद्योग्यत्वसंभवादसिद्धो हे्स्तत्राह—

**"श्रुतिविरोधान्न कुतर्कापसदस्यात्मलाभः" ॥ ३४ ॥**

कुतर्कापसदस्य=इत्थं कुतर्केण=कुत्सिततर्केण=वेदविरुद्धेनतर्केणेति यावदात्मानं जगदुत्पादानकारणं मन्वानस्य ते पुरुषाधमस्यात्मलाभः=अखण्डैकरससदात्मप्राप्तिर्न=न भवेत् । कुतः ? श्रुतिविरोधात्='**असन्नेव स भवति असद्ब्रह्मेति वेद्चेत्**' इत्यादिश्रुतिविरोधादित्यर्थः ।

---

१ श्वे. अ. ४–१० । २–तै. ब्राह्म. वल्ली. २ अनु. ६–१ ।

त्वया कार्य्यकारणयोस्तादात्म्यस्याभ्युपेतत्वात्कारणस्यात्मनः स्वरूपतोऽसत्त्वाभावेऽपि कार्य्यात्मनाऽसत्त्वं वक्तव्यं, तदसत्त्वे च कुतस्तल्लाभ इति भावः ॥ २४ ॥

**ननु** स्थावरादिषुसर्वेषुक्षित्यादीनामेवोपादानकारणतादर्शनात्कथं सर्वत्र प्रकृतेराद्योपादानता, तत्राह—

**"पारम्पर्य्येऽपि प्रधानानुवृत्तिरणुवत्" ॥ २५ ॥**

पारम्पर्य्येऽपि=स्थावरादिषु साक्षात्कारणत्वाभावेऽपि प्रधानानुवृत्तिः=प्रधानस्य=प्रकृतेरनुवृत्तिः=तेषु कारणतयाऽन्वयोऽस्त्येव । तत्रोदाहरणमणुवत्=यथा वैनाशिकसमयेऽणूनां=परमाणूनां साक्षात्कारणत्वाभावेऽपि सङ्घातादिषु कारणतयानुवृत्तिरित्यर्थः ॥ २५ ॥

**ननु** प्रकृतेराद्योपादानत्वे निश्चितेऽपि विभुत्वं कुतो निश्चेयं ? तत्राह—

**"सर्वत्र कार्य्यदर्शनाद्विभुत्वम्" ॥ २६ ॥**

प्रकृतेरिति संबन्धः । सर्वत्र कार्य्यदर्शनात्=सर्वासु दिक्षु सर्वेषु लोकेषु तद्विकारोपलम्भात्प्रकृतेर्विभुत्वं निश्चेतव्यमित्यर्थः ।

अत्र विभुत्वं सापेक्षं मन्तव्यं, ननिरपेक्षं, तस्य परमात्मन्ये वा भ्युपगमादिति दिक् ॥ २६ ॥

**ननु** प्रकृतेर्विभुत्वे तस्या जगत्सर्जनानुकूलक्रियायोगो न भवेत । कथञ्चित्तद्योगे वा तन्त्वादिवदाद्योपादानकारणता न सिध्येत, तत्राह—

**"गतियोगेऽप्याद्यकारणताऽहानिरणुवत्" ॥ २७ ॥**

गतियोगेऽपि=भगवदिच्छया जगत्सर्जनानुकूलक्रियायोगे सत्यपि प्रकृतेराद्यकारणताऽहानिः=मूलकारणताया हानिर्न भवति । अत्रोदाहरणमणुवत्=यथा वैनाशिकसमयेऽणूनां=परमाणूनां सङ्घातादिसर्जनानुकूलक्रियायोगेऽपि मूलकारणताया हानिर्नेत्यर्थः ॥ २७ ॥

ननु प्रकृतेर्गतियोगे द्रव्यत्वावश्यंभावात्पृथिव्यादिषु द्रव्येषु क्व तस्या अन्तर्भावो भविष्यति? तत्राह—

"प्रसिद्धाधिक्यं प्रधानस्य न नियमः" ॥ ३८ ॥

प्रधानस्य=प्रकृतेः प्रसिद्धाधिक्यं=प्रसिद्धेभ्यः पृथिव्यादिद्रव्येभ्योऽधिकत्वमस्ति। मूलकारणत्वात्। अतो न नियमः=यद्द्रव्यं तेन प्रसिद्धेष्वेवान्तर्भवितव्यमिति नियमो नेत्यर्थः॥ ३८ ॥

ननु प्रकृतेर्द्रव्यत्वे क्रियावत्सत्त्वादीनामपि तद्धर्मत्वमेव सिध्येत्, न तद्रूपत्वं, गुणत्वात्, तत्राह—

"सत्त्वादीनामतद्धर्मत्वं, तद्रूपत्वात्" ॥ ३९ ॥

सत्त्वादीनां=सत्त्वरजस्तमसां त्रयाणामतद्धर्मत्वं=प्रकृतिधर्मत्वं न भवति। कुतः? तद्रूपत्वात्=प्रकृतिस्वरूपत्वादित्यर्थः।

गुणशब्दप्रयोगस्तु तत्र केवलं रज्जुवद्बन्धनहेतुत्वादिति भावः ॥३९॥

ननु प्रधानस्य जडत्वेनात्मोपभोगाभावात् किमर्थं तस्यैषा सृष्टिः? तत्राह—

"अनुपभोगेऽपिपुमर्थंसृष्टिःप्रधानस्योष्ट्रकुङ्कुमवहनवत्" ॥ ४० ॥

प्रधानस्य=प्रकृतेरनुपभोगेऽपि=आत्मोपभोगाभावेऽपिपुमर्थं=पुरुषार्थं सृष्टिः=जगतः सर्जनम्। तत्रोदाहरणमुष्ट्रकुङ्कुमवहनवत्=यथोष्ट्रस्यात्मोपभोगाभावेऽपि पुरुषार्थं कुङ्कुमवहनमित्यर्थः ॥ ४० ॥

नन्वेकाकिन्याः प्रकृतेः सृष्टिवैचित्र्यं कुतो जातं? तत्राह—

"कर्मवैचित्र्यात्सृष्टिवैचित्र्यम्" ॥ ४१ ॥

कर्मवैचित्र्यात्=प्रकृतेरेकत्वेऽपि सहकारिभूतानां पुरुषकर्मणां वैचित्र्यात्सृष्टिवैचित्र्यं=तत्सृष्टिवैचित्र्यं जातमित्यर्थः ॥ ४१ ॥

ननु भवतु कर्मसहकृतात्प्रधानाद्विचित्रा सृष्टिः,प्रलयः पुनः कस्माद्भविष्यति? न ह्येकस्मात्कारणाद्विरुद्धकार्य्यद्वयं घटते। तत्राह—

"साम्यवैषम्याभ्यां कार्य्यद्वयम्" ॥ ४२ ॥

साम्यवैषम्याभ्यां=प्रकृतेरेव समभावविषमभावाभ्यां=सरूपविरूपपरिणामाभ्यामिति यावत्कार्य्यद्वयं=सृष्टिप्रलयलक्षणं कार्यद्वयं भवतीत्यर्थः ।

प्रकृतेःसरूपपरिणामात्प्रलयो विरूपपरिणामाच्चसृष्टिरितिभावः ॥४२॥

ननु कदा पुनः प्रकृतेः पुरुषार्थं सृष्टिर्न भवति? तत्राह—

"विमुक्तबोधान्न सृष्टिः प्रधानस्य लोकवत्" ॥ ४३ ॥

विमुक्तबोधात्=विवेकेनमुक्तस्यपुरुषस्यविवेकप्रत्ययोदयात्पश्चात् प्रधानस्य=कृतकार्य्यायाःप्रकृतेःसृष्टिः=तंविवेकिपुरुषंप्रतिजगतः सर्जनं न=नभवति, लोकवत्=यथाकृतकार्य्यस्यलोकस्यनपुनःप्रवर्तनमित्यर्थः ॥ ४३ ॥

ननु प्रकृतेर्व्यापकत्वादन्यान् प्रति भोगार्थमुपसर्पणे मुक्तस्यापि पुनर्भोगो भवेत्, संबन्धाविशेषात्, तत्राह—

"नान्योपसर्पणेऽपि मुक्तोपभोगो निमित्ताभावात्" ॥४४॥

अन्योपसर्पणेपि=अन्यानविवेकिपुरुषान् प्रति प्रकृतेरुपभोगार्थंप्रवर्तनेऽपि मुक्तोपभोगः=मुक्तस्य पुनरुपभोगो न=न भवति । कुतः? निमित्ताभावात्=भोगनिमित्तस्याविवेकस्याभावादित्यर्थः ।

अविवेककृतः पुरुषस्योपभोग इति भावः ॥ ४४ ॥

नन्वन्योपसर्पणेऽपीत्येतदयुक्तम्, अद्वैतात्मवादिनामस्माकंपुरुषबहुत्वाभावात्तत्राह—

"पुरुषबहुत्वंव्यवस्थातः" ॥ ४५ ॥

पुरुषबहुत्वं=पुरुषाणां=जीवात्मनां बहुत्वं=नानात्वमस्ति । कुतः? व्यवस्थातः=जन्ममरणबन्धमोक्षादिव्यवस्थात इत्यर्थः ।

अन्यथा व्यवस्था न स्यादिति भावः ॥ ४५ ॥

ननु पुरुषैकत्वेऽप्युपाधिबहुत्वाद्व्यवस्था सेत्स्यति किं पुरुषबहुत्वाभ्युपगमेन, तत्राह—

" उपाधिश्चेत्तत्सिद्धौ पुनर्द्वैतम्" ॥ ४६ ॥

चेत्=यदि जन्ममरणादिव्यवस्थासिद्ध्यर्थमुपाधिः=अविद्यालक्षणोपाधिः साध्यते, तर्हि मा साध्यताम्। कुतः ? यतस्तत्सिद्धौ=उपाधिसिद्धौ सत्यां पुनर्द्वैतं=पुनस्ते द्वैतं प्रसज्येतेत्यर्थः ॥ ४६ ॥

ननु साध्यमानाउपाधयोऽपि न परमार्थभूताः, किन्त्वाविद्यकाः, तेन तत्सिद्धावपि न नः पुनर्द्वैतप्रसङ्गः, तत्राह—

" द्वाभ्यामपि प्रमाणविरोधः " ॥ ४७ ॥

अपि=तथापि द्वाभ्याम्=अविद्या, पुरुष इति द्वाभ्यामभ्युपगताभ्यां सद्भ्यां प्रमाणविरोधः=अद्वैतसाधकत्वेनाभिमतेन प्रमाणेन विरोधस्त स्यादित्यर्थः ॥ ४७ ॥

किञ्च—

"द्वाभ्यामप्यविरोधान्नपूर्वमुत्तरञ्चसाधकाभावात्"॥४८॥

द्वाभ्यामप्यविरोधात्=प्रकृतिपुरुषौ चेदविद्यात्मानौ ते, तर्हि द्वाभ्यामप्यस्माकं विरोधाभावात्पूर्वम्=उपाधितो जन्ममरणादिव्यवस्थोपपादनं न=न सङ्गच्छते। परमार्थतः पुरुषनानात्वाभ्युपगमात्। उत्तरञ्च=तथा पुरुषाद्वैतसाधनमपि न=न सङ्गच्छते, साधकाभावात्=पुरुषाद्वैतसाधकप्रमाणाभावादित्यर्थः ॥ ४८ ॥

ननु स्वप्रकाशत एवाद्वितीयपुरुषः सेत्स्यति, किं साधकप्रमाणेन, तत्राह-

"प्रकाशतस्तत्सिद्धौ कर्मकर्तृविरोधः ॥ ४९ ॥

प्रकाशतः=स्वस्यप्रकाशतस्तत्सिद्धौ=तस्य=प्रकाशरूपस्याद्वितीयात्मनः स्वस्य सिद्धौ कर्मकर्तृविरोधः=एकस्मिन् प्रकाश्यप्रकाशकभावसंबन्धासंभवाद् यत्कर्म स एव कर्तेति कर्मकर्तृभावविरोध आपतेदित्यर्थः ।

अस्मन्मतेतुबुद्धिवृत्त्याख्यप्रमाणाङ्गीकारात्तद्द्वारा प्रतिबिम्बरूपस्य स्वस्य बिम्बरूपे स्वस्मिन् सम्बन्धो घटते, यथा सूर्ये जलद्वारा प्रतिबिम्बरूपस्वसंबन्ध इति भाष्यम् ॥ ४९ ॥

नन्वस्तु तर्हि प्रकाशाश्रयतया तत्सिद्धिः ? तत्राह—

"जडव्यावृत्तो जडं प्रकाशयति चिद्रूपः" ॥ ५० ॥

यत इति शेषः। यस्माज्जडव्यावृत्तः=जाड्यधर्मकात्साक्ष्यभूताद्बुद्ध्यादेर्भिन्नो जडं=जडजातं प्रकाशयति=भासयति, तस्माच्चिद्रूपः=चित् प्रकाशो ज्ञानमित्यनर्थान्तरं, प्रकाशस्वरूपः पुरुषो न प्रकाशाश्रय इत्यर्थः ।

तत्र जडव्यावृत्त इति प्रकाशाश्रयत्वंप्रतिषिद्धं, जडं प्रकाशयतीति सर्वसाक्षित्वमुक्तं, चिद्रूप इति पुरुषस्वरूपं निर्धारितमिति विवेकः ॥ ५० ॥

नन्वेवमद्वैतासिद्धेः "सएषनेतिनेति" इति जगन्निषेधेनात्मैकग्राहयन्त्या श्रुत्या विरोधः किन्न स्यात्, तत्राह—

"न श्रुतिविरोधोरागिणांवैराग्यायतत्सिद्धेः" ॥ ५१ ॥

श्रुतिविरोधः=पुरुषबहुत्वेऽपि जगन्निषेधकश्रुत्या विरोधो न=नभवति । कुतः ? रागिणां=विषयासक्तचेतसां वैराग्याय=विषयेषु हेयत्वबुद्ध्युत्पादनाय तत्सिद्धेः=जगन्निषेधोपपत्तेरित्यर्थः ।

जगतोविरक्तःसन्नात्मानंगृह्णातीति श्रुतेराशय इति भावः ॥ ५१ ॥

ननु जगत्सत्यत्वे कल्पनैषा युज्यते, तदेव कुतः ? तत्राह—

"जगत्सत्यत्वमदुष्टकारणजन्यत्वाद्बाधकाभावात्" ॥ ५२ ॥

जगत्सत्यत्वं=जगतः=महदादिप्रपञ्चस्यसत्यत्वं=त्रिषु कालेषु विद्यमानत्वमस्ति । कुतः? अदुष्टकारणजन्यत्वात्=निद्रादिदोषयुक्तं कारणं दुष्टकारणं, तद्भिन्नमदुष्टकारणं=भगवद्बुद्धिसहकृता प्रकृतिस्तज्जन्यत्वं=तदुपादेयत्वं, तस्मात्=भगवद्बुद्धिसहकृतप्रकृतिकारणकत्वात्, बाधकाभावात्=बाधकज्ञान विषयत्वाभावाच्चेत्यर्थः ।

तत्राद्येनहेतुना स्वाप्मार्थशंसपीतिमादिव्यावृत्तिः, द्वितीयेनशुक्तिरजतादिव्यावृत्तिरितिविवेकः ॥ ५२ ॥

---

१—बृ०अ०६—ब्रा०२—४ ।

ननु वर्तमानकालेसद्भवदपिजगदुत्पत्तेःप्राक्कथंसद्भवेत् ? तत्राह—

"प्रकारान्तरासंभवात्सदुत्पत्तिः" ॥ ५३ ॥

प्रकारान्तरासंभवात्=प्रथमाध्यायोक्तरीत्या प्रकारान्तरस्य संभवाभावात्सदुत्पत्तिः=सतः=उत्पत्तेःपूर्वं सूक्ष्मरूपेण विद्यमानस्यैव जगतः कारणव्यापारेणोत्पत्तिः=अभिव्यक्तिर्भवतीत्यर्थः ॥ ५३ ॥

ननु जगतः सत्यत्वे पुरुषस्य कर्तृत्वमपि सत्यं किन्न स्यात् ? तत्राह—

"अहंकारः कर्ता न पुरुषः" ॥ ५४ ॥

अहंकारः=चित्प्रतिबिम्बसमन्वितमहंकारावस्थापन्नं बुद्धिसत्त्वमेव कर्ता=कर्तृत्वाश्रयो, न पुरुषः=न पुमान्, अपरिणामित्वादित्यर्थः ॥ ५४ ॥

ननु पुरुषस्य कर्तृत्वाभावे भोक्तृत्वमपि न स्यात्, तत्राह—

"चिदवसाना भुक्तिस्तत्कर्मार्जितत्वात्" ॥ ५५ ॥

भुक्तिः=सुखदुःखयोरनुभूतिश्चिदवसाना=चिति=पुरुषेऽवसानं=पर्य्यवसानं यस्याः सा तथा । कुतः ? तत्कर्मार्जितत्वात्=अहंकारेणासाश्रितंपुरुषे कर्म, तत्कर्म, तेनार्जितत्वं=संपादितत्वं, तस्मात्=तत्पुरुषीयाहंकारकर्तृकर्मजन्यत्वादित्यर्थः ।

यद्यपि कर्तृत्वमिवतत्समकक्षंभोक्तृत्वमपिपुरुषस्यनास्ति, तस्यविशिष्टधर्मत्वात् । तथाप्यहंकारस्य जडत्वेन भोक्तृत्वासंभवात्तदवसानं चित्येवेति भावः ॥ ५५ ॥

नन्वेवं कर्मणामानन्त्याद्भोगार्थचन्द्रादिलोकंगतानांततःपुनरावृत्तिर्न स्यात्, तत्राह—

"चन्द्रादिलोकेऽप्यावृत्तिर्निमित्तसद्भावात्" ॥ ५६ ॥

चन्द्रादिलोकेऽपि=भूलोकवच्चन्द्रादिलोकेगतानामप्यावृत्तिः=तल्लोकोचितकर्मफलभोगानन्तरं पुनरावृत्तिर्भवत्येव । कुतः ? निमित्तसद्भावात्=पुनरावृत्तिनिमित्तस्याविवेककर्मादेः सत्त्वादित्यर्थः ॥ ५६ ॥

ननु तल्लोकवासिपुरुषोपदेशात्तत्र गतानांविवेकेनाविवकादिनष्टे पुनरावृत्तिर्न भविष्यति, तत्राह—

**"लोकस्य नोपदेशात्सिद्धिः पूर्ववत्" ॥ ५७ ॥**

लोकस्य=तल्लोकवासिपुरुषस्योपदेशात्=उपदेशमात्रात सिद्धिः=स्वकर्म फलोपभोगार्थं तल्लोकं गतानां विवेकज्ञाननिष्पत्तिर्न=न संभवति । पूर्ववत्= यथा पूर्वस्मिन् भूलोके भोगासक्तचेतस्कतयोपदेशमात्रान्नविवेकज्ञाननिष्पत्तिर्जातेत्यर्थः ॥ ५७ ॥

ननु किमर्थन्तर्हि **"चन्द्रमसो विद्युतं, तत्पुरुषोऽमानवः स एनान् ब्रह्म गमयत्येष देवपथो ब्रह्मपथ एतेन प्रतिपद्यमाना इमं मानवमावर्तं नावर्तन्ते"**[1] इति श्रुतिश्चन्द्रादिलोकं गतानामपुनरावृत्तिमभिधत्ते ? तत्राह—

**"पारम्पर्य्येण तत्सिद्धौ विमुक्तिश्रुतिः" ॥ ५८ ॥**

पारम्पर्य्येण=कथञ्चिद्वैराग्योदयाच्छ्रवणमनननिदिध्यासनाद्यनुष्ठानपरम्परया तत्सिद्धौ=विवेकज्ञाननिष्पत्तौ सत्यां विमुक्तिश्रुतिः=एषाऽपुनरावृत्तिश्रुतिरित्यर्थः ॥ ५८ ॥

ननु सांख्यानां पुरुषस्याणुत्वेऽपिकूटस्थनित्यतया गतिपरिणामासम्भवात् कथं तस्यकर्मफलोपभोगार्थं देशविशेषस्य लाभो भवेत्, तत्राह—

**"गतिश्रुतेश्च व्यापकत्वेऽप्युपाधियोगाद्भोगदेशकाल-लाभो व्योमवत्" ॥ ५९ ॥**

व्यापकत्वेऽपि=यथास्वशास्त्रमनुरुन्धतां विभुवादिनां भवतामात्मनो व्यापकत्वेऽपिशरीरोपाधिसम्बन्धाद्देशविशेषस्यलाभः, तथैव गतिश्रुतेश्च=स्मृत्यभ्युच्चयार्थश्चः, गतिप्रतिपादिकायाः श्रुतेः स्मृतेश्चवशवर्त्तिनामस्माकं सांख्यानामुपाधियोगात=बुद्धिसत्त्वप्रधानलिङ्गशरीरलक्षणोपाधिसंयोगाद्भोगदेशकाललाभः=स्वकर्मफलोपभोगार्थंतदुचितदेशविशेषस्य कालेन लाभः=प्राप्तिः

---

१—छां०प्रपा०४—खं० १५+६ ।

संभवति । तत्रोपाधिसम्बन्धादेकदेशतो देशान्तरस्य लाभमात्रे निदर्शनं व्योमवत्=यथाव्योम्नो घटोदञ्चनाद्युपाधिसंयोगादेकदेशतो देशान्तरस्य लाभ इत्यर्थः ॥ ५९ ॥

ननु यथा पुरुषोपभोगार्थं पूर्वं तदनधिष्ठितस्यैव लोकविशेषस्य सिद्धिर्जायते, तथैव भोगायतनसिद्धिरपि किन्न जायेत ? तत्राह—

**"अनधिष्ठितस्य पूतिभावप्रसंगान्न तत्सिद्धिः" ॥ ६० ॥**

तत्सिद्धिः=तच्छब्दो बुद्धिस्थत्वाद्भोगायतनमाचष्टे । भोक्तृपुरुषाधिष्ठानं विना तस्य भोगायतनस्य सिद्धिः=निष्पत्तिर्न=न संभवति । कुतः? अनधिष्ठितस्य=भोक्तृपुरुषानाधिष्ठितस्य तद्बीजभूतस्य शुक्रशोणितस्य पूतिभावप्रसङ्गात्=पूतित्वप्रसक्तेरित्यर्थः ॥ ६० ॥

ननु भोक्तृपुरुषादृष्टवशादपूतित्वप्रसक्तेस्तत्सिद्धिर्भविष्यति । किंतदधिष्ठानेनेत्याशंक्य समाधत्ते ।

**"अदृष्टद्वाराचेदसम्बद्धस्यतदसंभवाज्जलादिवदङ्कुरे" ॥ ६१ ॥**

न तत्सिद्धिरित्यनुवर्तते । अदृष्टद्वारा=भोक्तृपुरुषादृष्टद्वारा चेत=यदि तत्सिद्धिरित्याशङ्क्यते, तर्हि न=नाशङ्क्यम्, कुतः? असम्बद्धस्य=भोगायतनबीजभूते शुक्रशोणिते सम्बन्धरहितस्यादृष्टस्य तदसंभवात=भोगायतनसिद्धिहेतुत्वासंभवात् । तत्रोदाहरणंजलादिवदङ्कुरे=यथाबीजासम्बद्धस्य जलादेरङ्कुरे हेतुत्वं न संभवतीत्यर्थः ॥ ६१ ॥

किञ्च—

**"निर्गुणत्वात्तदसंभवादहंकारधर्मा ह्येते" ॥ ६२ ॥**

एते=अदृष्टादयोऽहंकारधर्मा हि=अहंकारावस्थापन्नबुद्धिसत्त्वधर्मा एव

---

१—सू० अ० ६ आ० ४ ।

सन्ति न पुरुषधर्माः । कुतः ? तदसंभवात्=तेषां पुरुषधर्मत्वसंभवाभावात् । कुतोऽसंभवः ? निर्गुणत्वात्=पुरुषस्य सर्वधर्मासंगित्वाभ्युपगमादित्यर्थः ।

तथा चादृष्टादीनां पुरुषधर्मत्वासंभवान्न तत्र तत्संबन्धसंभव इति भावः ॥ ६२ ॥

नन्वेवन्तर्हि कथमदृष्टादीनां जीवधर्मत्वव्यपदेश ? तत्राह–

" विशिष्टस्यजीवत्वमन्वयव्यतिरेकात् " ॥ ६३ ॥

विशिष्टस्य=अहंकारविशिष्टपुरुषस्य जीवत्वं=जीवभावो न तु केवलपुरुषस्य । कुतः? अन्वयव्यतिरेकात्=यत्राहंप्रत्ययस्तत्रजीवभावो, यत्र न तत्र नेत्यन्वयव्यतिरेकादित्यर्थः ॥

वैशिष्ट्यञ्च तच्छायापत्तौतादात्म्यम् । तेनयुक्तोव्यपदेशइतिभावः ॥ ६३ ॥

ननु जीवस्ययेयंलौकिकवैदिककार्य्यसिद्धिःसाकिंतस्यात्मतन्त्रा, परतन्त्रा वा ? तत्राह–

" अहंकारकर्त्रधीना कार्य्यसिद्धिर्नेश्वराधीना, प्रमाणाभावात् " ॥ ६४ ॥

अहंकारकर्त्रधीना=पुरुषप्रतिबिम्बसमन्विताहंकारकर्तृतन्त्रा कार्य्यसिद्धिः=कार्य्यं कर्म, तस्य=लौकिकवैदिककर्मणःसिद्धिः=अनुष्ठितिर्विद्यते नेश्वराधीना=न परमात्मतन्त्रा । कुतः ? प्रमाणाभावात्=भोगवत्कार्य्यसिद्धेरीश्वरतन्त्रत्वे प्रमाणाभावादित्यर्थः ।

कर्मणि स्वतन्त्रो, भोगे परतन्त्रो जीव इति भावः ॥ ६४ ॥

ननु यथानेश्वरतन्त्राकार्य्यसिद्धिस्तथाहंकारकर्तृतन्त्रापिन, किन्तु जीवादृष्टतन्त्रा, तत्राह–

" अदृष्टोद्भूतिवत्समानत्वम् " ॥ ६५ ॥

अदृष्टोद्भूतिवत्=उद्भूतिरनुष्ठितिः,जीवादृष्टतन्त्रा कर्मानुष्ठितिरित्युक्तिवत्=

इत्युक्तिसमैवेतियावत्पुरुषपुरुषकारतन्त्रा कर्मानुष्ठितिरित्युक्तिः, नास्ति किञ्चिदन्तरम्। अपि च समानत्वम्=उक्तिद्वयस्यार्थतस्तुल्यत्वमस्तीत्यर्थः।

अदृष्टस्यापि पुरुषपुरुषकारसाध्यकर्मत्वाविशेषादिति भावः॥ ६५॥

ननु पुरुषपुरुषकारसाध्यश्चेदखिलंकर्म, तदादुःखात्यन्तनिवर्तकं प्रकृतिपुरुषविवेकात्मकंमानसंकर्मास्यपुरुषस्ययथाकामंकुतोनजायते? तत्राह—

"महतोऽन्यत्" ॥ ६६॥

महतः=अनेकजन्माभ्यासपाटवेनजायमानशुद्धसत्त्वगुणमयसूक्ष्मतमबुद्धिसत्त्वतोऽस्यकल्याणभाजःपुरुषोत्तमस्यान्यत्=दुःखफलकेभ्योलौकिकवैदिकाखिलकर्मभ्योविलक्षणंप्रकृतिपुरुषविवेकात्मकंमानसंकर्मोद्भवतीत्यर्थः।

तथा च पुरुषपुरुषकारसाध्यमपि प्रकृतिपुरुषविवेकदर्शनं बुद्धितत्त्वमालिन्यादस्य पुरुषस्य यथाकामंनोत्पद्यते, तस्मान्मुमुक्षुणाऽनेन तच्छोधनोपायभूतं यमनियमादिकं यत्नतोऽनुष्ठेयमिति भावः॥ ६६॥

ननु ययोः प्रकृतिपुरुषयोर्विवेकदर्शनादस्य पुरुषस्य तत्संबन्धोच्छित्तिपूर्विका दुःखात्यन्तनिवृत्तिः शास्त्रेणोपदिश्यते, तयोः संबन्धः किन्निमित्तकः? तत्रैकदेशिमतमाह—

"कर्मनिमित्तःप्रकृतेःस्वस्वामिभावोऽप्यनादिबीजाङ्कुरवत्" ॥ ६७॥

प्रकृतेः=उपलक्षणमेतत्, बुद्धिसत्त्वात्मिकायाः प्रकृतेः पुरुषस्य च परस्परं स्वस्वामिभावः=प्रकृतेर्भोग्यत्वात्पुरुषस्य च भोक्तृत्वात्स्वस्वामिभावलक्षणः संबन्धः कर्मनिमित्तः=कर्मनिमित्तकारणकः, स चापि=कर्मनिमित्तोऽपि बीजाङ्कुरवत्=बीजाङ्कुरयोरिवानादिः=प्रवाहरूपेणकर्मणोनादित्वादनादिरित्यर्थः ६७

तत्रात्मसंमतं पञ्चशिखाचार्याणां मतमाह—

"अविवेकनिमित्तोवापञ्चशिखः" ॥ ६८॥

प्रकृतेः स्वस्वामिभाव इत्यनुवर्तते। पूर्वतो भेदसूचनाय वाकारः। प्रकृ-

तिपुरुषयोरविवेकनिमित्तकः स्वस्वामिभावलक्षणः संबन्ध इति पञ्चशिखः=पञ्चशिखाचार्य्यो मन्यते इत्यर्थः ॥ ६८ ॥

मतान्तरमाह–

**"लिङ्गशरीरनिमित्तक इति सनन्दनाचार्यः" ॥६९॥**

प्रकृतेः स्वस्वामिभाव इत्यनुवर्तते। प्रकृतिपुरुषयोः स्वस्वामिभावसंबन्धो लिङ्गशरीरनिमित्तक इति सनन्दनाचार्य्यो मन्यत इत्यर्थः ॥ ६९ ॥

उपसंहरति।

**"यद्वातद्वातदुच्छित्तिःपुरुषार्थस्तदुच्छित्तिः पुरुषार्थः" ॥ ७० ॥**

अध्यायपरिसमाप्त्यर्थो वीप्सा । यत्तदिति हेत्वर्थकमव्ययम् । प्रकृतेः स्वस्वामिभाव इत्यनुवर्तते । यतो वा ततो वा=कर्मनिमित्ततो वाऽविवेकनिमित्ततो वा, लिङ्गशरीरनिमित्ततो वा बुद्धिसत्त्वप्रकृतिपुरुषयोः स्वस्वामिभावः संबन्धोऽस्तु । सर्वथाऽपि तदुच्छित्तिः=विवेकज्ञानं विना दुरुच्छेद्यस्य तस्य संबन्धस्योच्छेदः पुरुषार्थः=दुःखात्यन्तनिवृत्तिहेतुत्वात्परमपुरुषार्थ इत्यर्थः ॥ ७० ॥

आत्मास्तित्वादिमोक्षान्तो विषयोऽपूर्वयुक्तिभिः ॥
स्थूणान्यायेन तन्त्राख्ये पुनः षष्ठे निरूपितः ॥ १ ॥
कपिलेन प्रणीतेयं वैदिकी सांख्यकप्रपा ॥
मया हरिप्रसादेन वृत्त्या सम्यक्परिष्कृता ॥ २ ॥
यत्प्रसादादियं वृत्तिर्नित्यं स्थास्यति निश्चला ॥
मद्भीभावेन वन्द्योऽसौ विद्यादातेश्वरस्सदा ॥ ३ ॥

**इति श्रीमत्परमहंसपरिव्राजकाचार्य्योदासीनवर्य्यात्मारामभगवत्पादशिष्यहरिप्रसादकृतायां सांख्यसूत्रवृत्तौ तन्त्राध्यायः षष्ठः ॥ ६ ॥**

---

# सांख्यसूत्रवैदिकवृत्तेः शुद्धाशुद्धपत्रम् ।

| पृ० | पं० | अशुद्धम् | शुद्धम् |
| --- | --- | --- | --- |
| १५ | ३ | कस्याप्यमनु | कस्याप्यनु |
| २२ | १६ | तेषां | तत्र सत्त्वं प्रकाशः,रजःक्रिया, आवरणं तमः,तेषाञ्चमीषां |
| ६१ | ८ | व्यारेत् | व्याहरेत् |
| ८५ | १६ | परहंस | परमहंस |
| ८५ | ११ | जीजि | जिजी |
| ८८ | ४ | स्तेन | तेन |
| १०६ | १५ | निरस्पति | निरस्यति |
| १०७ | १६ | सबें | सर्वे |
| १०८ | ३ | वेदाना | वेदानां |
| १०९ | ७ | प्रमात्व | प्रमाणत्व |
| १११ | २७ | त्पादकता | त्पाद्यता |
| १२१ | १६ | सज्ञा | संज्ञा |
| १३७ | १ | साख्यानां | सांख्यानां |
| १४२ | ८ | दोषदर्शनयमनियमादि साधन सङ्ग्रहः | दोषदर्शनादि सङ्ग्रहः |
| १४२ | १५ | नपवापरावराधइ | न पूर्वापरविरोध इ |

क्वचित् तकारस्यद्वित्वमद्वित्वञ्च स्वयमूह्यम्—